॥ श्रीः ॥

आचार्य ग्रन्थमाला–३३



# चतुश्श्लोकी व्याख्या

मतत्रय सारास्वादि एम. ए. बी. एल. विरुदभाग्भिः

श्रीमद्भिः अम्बिल. वे. गोपालाचार्यैः

विरचिता

सम्वत् २०११

मूल्यम् ।।।)

॥ श्रीः ॥

आचार्य ग्रन्थमाला—३३



# चतुश्श्लोकी व्याख्या

मतत्रय सारास्वादि एम. ए. बी. एल. विरुदभाग्भिः

श्रीमद्भिः अम्बिल. वे. गोपालाचार्यैः

विरचिता

सम्वत् २०११

मूल्यम् ।।।)

॥ श्रीः ॥

# व्याख्यातृ परिचयः

अस्याः शास्त्रतत्वालंकृतायाः व्याख्यायाः निर्माता श्री अ० व० गोपालाचार्य महोदयः त्रिसप्तत्युत्तरे अष्टादशशते खीष्टाब्दे श्रीमुखे चैत्रे श्रीरंगनायका श्रीरंगनाथकयोः पादमूले श्रीरंगधाम्नि जनिमालेभे । अयं महानुभावः सफलः प्राड्विवाकः स्वकार्यकालं त्रिशिरःपल्ल्यां समापयत् । स्वकार्यसंलग्न एव श्रीवेंकटनाथदेशिक विरचितेषु भट्टारक निर्मितेषु च स्तोत्रेषु तथैव च कालिदासीय काव्येषु च सारगर्भिता मनोरमा व्याख्या विरचयांचकार । तथैव च श्रीभाष्ये तट्टीकायां श्रुतप्रकाशिकायां च परैः कृतानाक्षेपान आमूलचूलं निवारयन साधु प्रत्युदतीतरत ।

सर्वाश्चैता, कृतयः परः शतैरध्येतृभिः सबहुमानं वाच्यन्ते अथ च मौलिककृतित्वेन स्वीक्रियन्ते । अस्य समन्वयात्मक लेखनशैल्याः सर्वैः वेदान्तवादिभिर्मुक्तकण्ठेन प्रशंसा कृता । अयं च महानुभावः अद्यापि लेखिन्याश्चमत्कारं प्रदर्शयन्नेवास्ते तत्प्रमाणं चैतत यदनेन अतीते वर्षे एव इयं चतुःश्लोकी व्याख्या निर्मिता । द्राविड प्रबन्धेष्वप्येतत्कृता व्याख्याः प्रमाणकोटिमाटीकन्ते सस्पृहं च जिज्ञासुभिरधीयन्ते । एतत्कृत ग्रन्थानां चैवं सूची—

**संस्कृत**

*व्याख्या*

१–श्रीभगवद्धयानसोपानम्

२–दशावतारस्तोत्रम्

३–गोपालविंशति

४–श्रीस्तुति

५–देवनायक पञ्चाशत्
६–रंगराजस्तवपूर्वशतकम्
८–कुमार सम्भवम् सर्ग १-३
९–रामायणसंक्षेपसर्ग व्याख्या
१०–भागवतसंक्षेप
११–चतुश्श्लोकी
१२–सन्देशद्वयसारास्वादिनी
१३–प्रबोधचन्द्रोदय (प्रथम अङ्क)

*आक्षेप निराकरण—*

१४–अद्वैतपरिभाषा भूमिका-
विमर्श
१५–सूत्रानुशुन्यसिद्धि विमर्शः
(भाग १-३)
१६–वेदान्तरक्षामणिविमर्शः
(१-४)

## द्राविड़ व्याख्या

१७–दयाशतकम्
१८–गोदास्तुतिः
१९–सुभाषितनीवि
२०–यादवाभ्युदय (१३-१६)
२१–वैराग्यशतकम्
२२–संकल्पसूर्योदयम्
२३–ब्रह्मसूत्रानुभवम्
२४–श्रीभाष्य श्रुतप्रकाशिका
चतुस्सूत्री २-४
२५–उभयवेदान्तऐककण्ठ्यम्
२६–पादुकासहस्रविमर्शम्
२७–वात्सल्यविचारम्
२८–अभीतिस्तवम्
२९–करुणालहरी
३०–अमलनादिअनुभवम्
३१–तिरुमलै अनुभवम्
३२–तिप्पल्लाण्डु अनुभवम्
३३–यतिराजविंशतिः
३४–यतिराजसप्ततिः (१-४०)
३५–वरदराजपञ्चाशत् (१-२५)
३६–विष्णुपादादिकेशान्त स्तोत्रम्

## ENGLISH.

37–Exposition of Isavasyopanishad.
38–Advaitic expositions of the chandogya

satvidya and mundaka upanishad.

39-Exposition of kathopanishad.

40-Translation and elaborate English notes on Bharthruhari's Sringara and Vairagya shatakams.

41-Sri krishna charitram.

42-Valmiki and kamban (Balakandam.

43-Desikar as a poet.

वेदालङ्कारः विद्यासागर शास्त्री M. A.
साहित्यचार्य, पञ्चतीर्थ

# शुद्धि पत्रिका

| पृ० | पं० | शुद्धं |
|---|---|---|
| १ | ४ | कृत |
| २ | ६ | स्संख्यया |
| ,, | ११ | स्वशेषाऽशेषा- |
| ,, | २१ | निश्चित्य |
| ४ | १४ | त्तमशब्देन |
| ७ | २ | वरो भोगो |
| ,, | ,, | शय्याभवने |
| ४ | १६ | रत्तोन्मुखं |
| ६ | २० | यवनिका |
| १० | २१ | तृतीय |
| ११ | ४ | धिकरणंद्वयमपिस् |
| ,, | ६ | पनाय……चिना |
| ,, | २२ | कथितं स्त्री |
| १२ | १३ | नामुभय |
| ,, | १७ | उच्यते……रूपाऽसा |
| ,, | १८ | सम्पन्ना श्रीः |
| ,, | २१ | श्रृ (दीर्घः) |
| १३ | ४ | श्रिया एव |
| ,, | १६ | श्रृ (दीर्घः) |
| ,, | १७ | श्रेयांसि |
| ,, | २१ | र्गतत्वात् |
| ,, | २२ | पाद्यते |
| १४ | १ | कम्। तयोरपिस्तु-<br>तिरूपत्वम्- |
| १४ | ६ | स्पष्टंप्रतिपाद्यते |
| १५ | १६ | स्रष्ट |
| १५ | २० | श्रियः |
| १६ | १६ | खण्डे, |
| ,, | ,, | स्थानत्वेनापार |
| १६ | १७ | वात्सल्ये भगवता-<br>ऽविष्क्रियेते |
| २४ | १० | यैत्र |
| २४ | ११ | भस्य यदि |
| २६ | ५ | षये मेनां मुनी |
| २७ | ४ | भूयिष्ठ……"दिव्य |
| २८ | ६ | भीतिध्रुवं |
| २९ | ४ | र्मकर |
| ३२ | १ | करणे |

| पृ० | पं० | शुद्धं |
|---|---|---|
| ३२ | ७ | भतः |
| ३३ | ५ | पूर्वपराधि |
| ३५ | १९ | नाकाले.......कलुं |
| ३६ | ७ | वक्तव्यत्वादत्र |
| ३६ | १४ | वरसंसारा |
| ३९ | १८ | मन्त्रे |
| ४० | ९ | कीव |
| ४० | १७ | घनस्वस्व |
| ४१ | ८ | नन्दघन |
| ४१ | १६ | वात्सल्यकरु |
| ४२ | २ | अनन्वा |
| ४२ | १६ | योगेविषयी |
| ४३ | ५ | प्रयुक्त |
| ४३ | ६ | त्वेनाहत्य |
| ४३ | २१ | श्लाघ्येच |
| ४४ | १ | रीतिरपि |
| ४५ | ५ | इव । |

| पृ० | पं० | शुद्धं |
|---|---|---|
| ४५ | १३ | पत्तिदृश्य |
| ४६ | २ | तयैधाति |
| ४५ | ६ | कश्चिदेकः |
| ४६ | ९ | तन्ना |
| ४६ | १६ | प्रभवामश्च । |
| ४६ | १९ | त्यान्यत्यन्तं |
| ४७ | ७-८ | भवतःस्वरू |
| ४९ | ४ | विलोचनाभिः । |
| ४९ | ८ | शुकवर्णनं |
| ५० | १५ | मस्मदत्य |
| ५१ | १५ | प्रकृतिं |
| ५२ | १८ | स्वश्लाघित |
| ५३ | १९ | भिज्ञापितः । |
| ५४ | ६ | चात्रभाव्यं |
| ५४ | १८ | कंचिदव्य |
| ५५ | २० | अवतारेषु |
| ५५ | २२ | विष्णोः श्रीर |

॥ श्रीः ॥

# ॥ चतुश्श्लोकी व्याख्या ॥

स्तोत्ररत्नम् इत्याचार्ययामुनकृतभगवत्स्तोत्रनाम । एतत्स्तोत्रात्पूर्वं रचितं तत्स्तोत्रमिति प्रतिभाति । तत्रैव नाथोपज्ञस्यास्मद्दर्शनस्य प्रवर्तकस्य स्वपितामहस्य स्तुतिरूपं मङ्गलं निबद्धं त्रिभिः श्लोकैः । वैदिककपिञ्जलाधिकरणन्यायः शान्तिशब्दपठनस्य त्रिरभ्यासश्चानुसृत इव त्रित्वसंख्याश्रयणेन । पुराणरत्नकृत देवतापारमार्थ्यवित् इति पराशरः तत्पुराणं च स्तुतं तत्र स्तोत्रप्रदर्शितसर्वतत्त्वानां पराशरानुग्रहभाक्त्वप्रदर्शनाय । अत्रापि पराशरपुराणमेव शब्दतोऽर्थतश्चानुसृतमिति स्पष्टम् । स्तोत्ररत्ने शेषस्य बहुप्रकारैः यथोचितं यथा यथा शेषिसौकर्यं तथा तथा रूपपरिग्रहो वर्णितः । 'निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः । शरीरभेदैस्तवशेषतां गतैर्यथोचितं शेष इतीर्यते जनैः' इतिश्लोके फणिपतेः स्वामिसेवार्थं परिगृहीतानि बहुरूपाणि निर्दिष्टानि । अत्र च शय्या आसनम् इति सेवारूपद्वयमेवाभिहितं शब्दतः । इतराणिचोपलक्षणविधया जिघृक्ष्यन्ते । सुपर्णविषये 'दासस्सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः' इति बहुरूपभजनमुक्तम् । अत्र वाहनपदेनेतराण्युपलिलक्षयिषितानि । यत्र पूर्णोपदेशस्तद्ग्रन्थस्यैव पूर्वरचितत्वं साम्प्रतम् । 'पुरुषोत्तमः कः' इति स्तोत्ररत्ने प्रश्नः कृतः । अत्रतस्योत्तरं दीयते—

कान्तस्ते पुरुषोत्तमः, फणिपतिः शय्यासनं वाहनं
वेदात्मा विहगेश्वरो, यवनिका माया जगन्मोहिनी ।
ब्रह्मेशादिसुरव्रज स्सदयित स्त्वद्दासदासीगणः
श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम् ॥

ततोपि स्तोत्ररत्नस्य पूर्वरचितत्वसम्भवः । श्लोक चतुष्टय मात्रघटितेयं स्तुतिः । मातृविषयेशिशुत्वमभिमन्यत इव । सौन्दर्यलहर्यां श्रीशंकरभगवत्पादैः द्रमिडशिशुरित्यात्मा मातृसन्निधौ निर्दिश्यते । मातृप्रसादनाय दीर्घस्तुतेरनपेक्षा । शारीरकाध्यायसंख्याऽऽहृता चतुस्संख्यास्य स्तोत्रस्य । शारीरकाध्याय विषयाः क्रमेणास्यां चतुश्श्लोक्यां भगवतीव श्रियामपि संघटन्ते । 'स्वशेषा शेषार्थो निरवधिकनिर्वाधमहिमा फलानां नेता यः फलमपि च शारीरकमितः । श्रियं तत्सध्रीचीं तदुपसदनत्रासशमनीमभिष्टौति स्तुत्यामवितथमतिर्यामुनमुनिः ।' इत्याचार्यश्लोकोऽत्र भाव्यः । अनेन ईश्वरत्वस्य मिथुने व्यासज्य वृत्तित्वं सिध्यति । 'लोककान्तस्य कान्तत्वा' दिति रामविषये गौतमादिकविना । सर्वलोककमनीयः सर्वलोककान्तः श्रियः कान्तः । ते कान्तः सर्वलोककान्तः । ते कान्तः पुरुषोत्तमः । श्रीकान्त मुद्दिश्य पुरुषोत्तमत्वं विधीयते । उद्देश्यं पूर्वं, विधेयं परम् । 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति पुरुषसूक्तोत्तरानुवाकः । श्रीभूमिपत्नीयुगलदर्शने भर्तुः पुरुषसूक्तप्रतिपाद्यस्य पुरुषस्याभिगम्यत्वं निश्चित्य तत्संनिकर्षं प्राप्य 'ते' इति तत्रैव प्रत्यक्षं संबोध्यते तत्पूर्वं परोक्षतयैव भगवन्निर्देशः कृतः 'स' इत्यादिना । तत्र पत्न्या

पत्न्यौ निरूप्येते, 'ते पत्न्यौ ह्रीश्च लक्ष्मीश्चे' ति। अत्र पति निरूप्यते पत्न्या 'ते कान्तः पुरुषोत्तम' इति, 'रामानुजं लक्ष्मण-पूर्वजं च' इतिन्यायेन । 'मातर्लक्ष्मि यथैव मैथिलजनस्तेनाध्वना ते वयं त्वद्दास्यैकरसाभिमानसुभगैर्भावै रिहामुत्र च । जामाता दयित स्तवेति भवतीसंबन्धदृष्ट्या हरिं पश्येम प्रतियाम याम च परोचारान् प्रह्वष्येम च ।' इति श्रीगुणरत्नकोशश्लोकोऽत्र भाव्यः। 'पुंसूक्तादि प्रसिद्धो गुणनिधिरवाजद्ब्रह्मशब्दार्थ उक्तः' 'नानागमोद्यद्विशयशमनतश्श्रीमति ब्रह्मतोक्तेः' इति सारावल्युक्त-मिह भाव्यम् ॥

ते कान्तः पुरुषोत्तमः इत्यत्रोपक्रम एव पठनेन श्रीभाष्य प्रदर्शितरीत्या ब्रह्मशब्दार्थोक्त्यास्य स्तोत्रस्य ब्रह्मशब्दार्थोपक्रमत्वं लभ्यते । पुरुषोत्तमस्यैव मोक्षप्रदत्वप्रसिद्धिः खंडनखाद्य-ग्रन्थकृता श्रीहर्षेण प्रख्यापिता नैषधीयद्वितीयसर्गारम्भे 'अधि-गत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमाद्यथा । वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः' इति । एतन्नाम्ना तृतीय-श्लोककथितत्रैष्णबाधत्रपारगमनरूपश्रेयः प्रदानसामर्थ्यं एत-द्दिव्यमिथुनस्यास्तीति सूच्यते । 'वेदान्तास्तत्त्वचिन्तां मुरभि-दुरसि यत्पादचिह्नैस्तरन्ति' इति श्रीगुणरत्नकोशे श्रियः पति-त्वस्य परब्रह्मोपलक्षकत्वं कथितमिव । 'ते' इति वदन् मातृनिकटे आगत्य तां संबोधयति । 'ते' इति पदेन 'ते पत्न्यौ' इति श्रुतिः स्मार्यते । 'लक्ष्मीस्ते पत्नी' इति भगवन्तमुद्दिश्य प्रयुक्तस्य वाक्य-स्य स्थानेऽत्र मातरमुद्दिश्य 'ते कान्तः पुरुषोत्तमः' इति पदविपरि-

णामः क्रियते। 'श्रीमान् लोकत्रयाश्रयः' इति सहस्रनामसु पठनेन श्रीमत्त्वात् लोकत्रयं तमाश्रयते, इतरथा तस्याऽभिगम्यत्वमेव न स्यादितीदं व्यज्यते। ते इत्यत्र संबोध्या प्रति निर्देशः 'श्रीरित्येव च नाम ते' इति चतुर्थपादे श्लोकान्ते पुनरभ्यस्यते। ते, ते, इति पुनः पुनः पठनं 'ह्रीश्चते लक्ष्मीश्च पत्न्यौ' इत्यत्र ते पदस्यानुकरणं, आदर बाहुल्येनाम्रेडनं च व्यञ्जयति॥

पुरुषोत्तम शब्दो भगवति लोकवेदप्रसिध्या रूढः। तस्मिन्नेव मुख्यवृत्तः। अन्यत्र तद्गुणलेशयोगादौपचारिकः। 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति गीताश्लोकः स्स्मार्यतेऽत्र पुरुषोत्तमशब्दपठनेन। 'प्रथितः' इति गीताश्लोकपदेन रूढिरूपा प्रसिद्धिर्द्योत्यते। प्रथितः प्रसिद्धः। कूटस्थशब्दवाच्यादक्षरान्मुक्तात्मनोऽपि अतीतत्वरूपाधिकत्वं, उभयविभूतिनायकत्वं च द्योत्यते पुरुषोत्तम शब्देनाक्षरशब्दवाच्यसर्वभूतानि लीलाविभूतिः। कूटस्थशब्दवाच्यनिर्विकारनित्यमुक्तपुरुषाः नित्यविभूतिस्थाः। फणिपतिः, विहगेश्वरः, इति नित्यसूरिपरिचर्यमाणोक्तिः पूर्वार्धे नित्यविभूतिनायकत्वं गमयति। उत्तरार्धे ब्रह्मेशादिसुरव्रजतद्दयितादिस्वाम्यकथनेन लीलाविभूतिनायकत्वं समर्प्यते। नागोत्तम शब्दवत्पुरुषोत्तम शब्दो विगृह्यते शाब्दिकैः पुरुषेपूत्तम इति। 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः' इति गायता भगवता उत्तमः पुरुषः इति व्यस्त प्रयोगेऽपि इयं रूढिरस्तीति ज्ञाप्यते।

'परं ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते, स उत्तमः पुरुषः' इति दहरप्रजापतिविद्ययोरभ्यस्तश्रुतिवाक्ये पठितः 'उत्तमः पुरुषः' नारायणपरो ज्योतिः पुरुषोत्तमः। श्रीशांकरगीताभाष्ये 'आभ्यां क्षराक्षराभ्यां अन्यः विलक्षणः, क्षराक्षरोपाधिद्वय-दोषेणास्पृष्टो नित्य शुद्ध बुद्ध मुक्त स्वभावः उत्तमः उत्कृष्टतमः पुरुषस्त्वन्योऽत्यन्तविलक्षणः आभ्यां परमात्मापरमश्चासौ देहाद्य-विद्याकृतात्मभ्यः आत्मा च सर्वभूतानां प्रत्यक् चेतनः इत्यतः परमात्मेति उदाहृतः उक्तः वेदान्तेषु। स एव विशेष्यते यः लोक-त्रयं भूर्भुवस्स्वराख्यं स्वकीयया बलशक्त्या, आविश्य प्रविश्य बिभर्ति स्वरूपसद्भावमात्रेण बिभर्ति धारयति, अव्ययः न अस्य व्ययः विद्यते इत्यव्ययः, कः, ईश्वरः सर्वज्ञः नारायणाख्यः ईशनशीलः॥

यथा ख्यातस्य ईश्वरस्य 'पुरुषोत्तमः' इत्येतत् नामप्रसिद्धम्। तस्य नामनिर्वचनप्रसिध्या अर्थवत्वं नाम्नो दर्शयन् 'निरतिशयः अहमीश्वरः' इत्यात्मानं दर्शयति भगवान् यस्मात् क्षरमतीतः अहं संसारमायावृक्षं अश्वत्थाख्यं, अक्षरादपि संसारमायावृक्षबीज-भूतादपि च उत्तमः उत्कृष्टतमः ऊर्ध्व तमो वा अतः ताभ्यां क्षरा-क्षराभ्यां उत्तमत्वात् अस्मि भवामि लोक वेदे च प्रथितः प्रख्यातः। पुरुषोत्तम इत्येवं मां जनाः विदुः, कवयः काव्यादिषु च इदं नाम निबध्नन्ति—इति 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' 'स उत्तमः पुरुषः इत्यादि लोकवेदप्रसिध्या पुरुषोत्तम इति मां भक्तजना विदुः' इति तत्र भाष्योत्कर्षदीपिका व्याख्या। 'राघवं शोभय-

न्त्येते षड् गुणाः पुरुषोत्तमम्' इत्ययोध्याकाण्डारम्भे राघवस्य पुरुषोत्तमत्वं तन्नामसंपादकापूर्वषड् गुणविशिष्टत्वं चोक्तम् । 'राघवत्वेऽभवत्सीता' 'सीता लक्ष्मीः' 'इति पराशरः । राघवं कामयमाना रावणावरजा राक्षस्यपि राघवे पुरुषोत्तम शब्दं प्रयुयुजे । 'पुरुषोत्तमः कः' इति प्रष्टुः यामुनाचार्यस्य ईश्वर भक्तं कालिदासं पृच्छ इति भावः ॥

यथा त्वत्कान्तः पुरुषोत्तमः तथा त्वं 'नारीणामुत्तमा वधूः । सुतरां तुल्यत्वं दम्पत्योः । श्रियः पतेः अनुरूपः शय्या फणिपतिः । ईश्वरमिथुनस्य फणिपतिः शय्या, सिंहासनंच, विहगेश्वरः औपवाह्यम् इति पतीश्वरशब्दाभ्यां शय्यावाहनविषयप्रयुक्ताभ्यां द्योत्यते । कान्तयोर्दम्पत्योः कीर्तने तयोः का उत्तमा शय्या इत्याकांक्षा सहजा । सा सद्य एव पूर्यते फणिपति श्शय्या इति कीर्तनेन । योगीश्वर मिथुनमिदम् सिद्धानां योगिनां सन्निधौ मिथश्शत्रूणां शाश्वतिकविरोधिनामपि परस्परं वैरत्यागो भवति इति सूत्रितं भगवता पतञ्जलिना 'तत्सन्निधौ वैरत्यागः' इति । फणिपति-पन्नगाशनयोरत्र शेषिदम्पत्यो स्सकाशे परममैत्र्या सततसहसन्निधानं स्वामिनो नित्यसिद्धयोगित्वं सूचयति । फणिपतिः शय्या आसनं च भवति । 'तया सहासीनमनन्तभोगिनि प्रकृष्ट विज्ञानबलैकधामनि । फणामणिव्रातमयूखमण्डलप्रकाशमानोदर-दिव्यधामनि ।' इति स्तोत्ररत्नश्लोकोऽत्र भाव्यः । 'अनन्त भोगिनि' इति तत्रत्यपदस्यार्थद्वयं ग्राह्यम् । अनन्त नामा भोगी तस्मिन्नित्येकोऽर्थः । अनन्तसुखिनीत्यपरोऽर्थः । आसी-

नयोश्शयानयोश्च दम्पत्योरिवास्यानन्तस्यापि भोगः सुखानु भवोऽनन्तः । तद्भोगानवरो न भोगोऽस्य । कदाचित दम्पत्यो श्शय्यासनभोगः सान्तस्स्यात् । तयो र्भोगस्य सान्तत्व कल्पनेपि अस्यफणिपते श्शय्यासनभूतस्य नियमेनाऽऽनन्त्य मेव भवति ॥

शय्या प्रायेण अचेतना भवेत । अनयोश्शय्या प्रकृष्ट विज्ञान बलैकधामा सर्वज्ञ श्चेतनः । चेतनस्य शय्या भवनेऽस्ति भूयस्सौ कर्यम । शयानदम्पत्यो स्सदा जाग्रता शेषिदम्पत्यभीष्टसर्व विधसुखसम्पादनैकनिरतेनानन्तेन शय्या भूतेन शेषिणो स्तदा तदा जायमानसर्वेच्छाज्ञात्रा तयोर्यथा यथा सुखं जायेत तथा तथा आत्मानं विपरिवर्तनविपरिणमनाभ्यां प्राध्वं कारायितुं शक्यते । एतस्य चेतनत्वमनुकूलम् । विश्वं विभ्रतो रनन्त स्वरूपयोः दम्पत्योर्भरणे चेतनभूतशय्यायाः दुर्भरभारवहनेन दुःखवेदनासम्भवोऽस्ति । शय्याया अचेतनत्वे नेदृशकष्ट- स्यापातसंभवः । सुदुर्वहसुमहद्भारपीडित श्चेतनः वेदनाबलेन भृशमुछ्वसेन्निश्वसेच्च । शय्यायाश्चेतनत्वे ईदृशं कष्टमापद्येत । विश्वं कृत्स्नं शिरोभिः सततं लीलयैवानायासेन बिभ्राणस्यान- न्तस्य बलस्यानन्तत्वात् नतस्य मनागपि व्यथा जनिः अनन्तशेषि मिथुनभारवहनादिना इति व्यञ्जितं 'प्रकृष्ट विज्ञानबलैकधामनि' इति स्तोत्ररत्नश्लोके विज्ञानबलयोर्निरवधिकत्वकथनेन । 'एकधाम' इत्यत्र एकशब्देन ज्ञानबलकाष्ठयोस्सहवर्तित्ववैरल्यं सूच्यते । चेतनसंभावितभारवहनवेदनाजनितोछ्वास निश्वासा- भावः बलिष्ठायामचेतनायां शय्यायां सुसंभवः । सर्वेश्वरेश्वरः

कान्तः पुंप्रधानेश्वरेश्वरी लोकैकेश्वरी अस्य जगतः ईशाना पत्नी । सर्वलोकेश्वरमिथुनस्यासनं सिंहासनमेव भवेत् । पुरुषोत्तमपदस्य विग्रहप्रतिपादनेऽस्ति काचिद्दुर्घटता । साच फणिपतिभाष्येण घटयते । नागोत्तमादिवत्सिद्धं भवतीति तद्भाष्य भाषितमपि अस्यकवेः स्मृति पथमारूढम् । 'पुरुषोत्तमः' फणिपतः 'इत्यव्यवहित समभिव्याहारेण एतद्विषय फणिपति भाष्यमपि सिस्मारयिषितम् ॥

उभयविभूतिनायकेनानेन मिथुनेन स्वशासनीयविभूतिद्वय-सततसञ्चरणार्थं सर्वोत्तमं वेगवत्तमं वाहनं ध्रुवमाकाङ्क्षयेत । सर्वलोकमातापितराविमौ दम्पती । आर्ताः प्रजास्सर्वा विश्वस्थाः आर्तितितीर्षया रक्षतु भगवानिति 'भृशं क्रन्देयुः दुर्मोचोद्भटकर्म-कोटिनिगडिताः तापत्रयातुराः संसारान्मोचनं काङ्क्षन्तः आसते । तत्फलदातारौ इमौ दम्पती सर्वबन्धेभ्यो मोक्षणाया-ह्वयेरन् । आपन्नार्तिप्रशमने बद्धदीक्षेण मिथुनेन अतिवेगमति-क्षिप्रं तत्समीपगमनाय तद्रक्षणाय च वेगवद्वाहनं ध्रुवमपेक्षयेत । 'आहुः श्रुतिं विबुधनायक तावकीनामाशागणप्रशमहेतुमधीत-वेदाः । आकर्णिते तदियमार्तरवे प्रजानामाशाः प्रसाधयितुमादि-शति स्वयं त्वाम्' इति देवनायकपञ्चाशत् श्लोकः, 'आनेतुमात्म-रभसेन समीहमानः रक्षोन्नतं नतगृहेषु रमासहायम् , प्रायः प्रभो स्तदपृथक्स्थितिवृत्तिशक्तिं संकल्पमप्युपहरिष्यति तद्रथोऽसौ ।' इति सङ्कल्पसूर्योदयश्लोक श्चात्र भाव्यौ । आकाशयानेन लोकत्रय-सञ्चरणं दम्पत्यो र्भोगाय भवेत् । कर्दमदेवहूत्यो राकाशविमान-

सञ्चरणादिविहारप्रचुरं गार्हस्थ्यं वैमानिकैरपि प्रार्थ्यमनुपममिति शुकेन वर्णितम् । सर्वलोकसञ्चारणायातिवेगवत्गगन मार्गधावनदक्षगरुडादिवाहनमेवानुकूलतमम् । वेदात्मा च गरुत्मान् सुपर्णः । वेदरूपं शास्त्रमेव दिव्यमिथुनं वहन् अस्मत्कर्णसमीपमागत्य श्रवणादिपरम्परयाऽस्मद्धृदि प्रतिष्ठापयेम् । 'शेषश्चित्तं विमलमनसां मौलयश्च श्रुतीनां सम्पद्यन्ते विहरणविधौ यस्य शय्याविशेषाः' इति प्रसिद्धत्वेन गीतम् श्रीस्तुतौ । शेषशय्या कीर्तनानन्तरं वेदमौलिरूपशय्यायाः तदात्मभूत सुपर्णकीर्तनद्वारा सूचनं न्याय्यमेव ॥

'यवनिकामाया जगन्मोहिनी':—

परस्परकमनीयौ नित्ययुवानौ लावण्यनिधीदम्पती । तयोरेकान्तर्बहिर्विहारादिसाधक शय्यावाहनादिकथनं न्याय्यमेव । दम्पत्योः शय्याविहारकथनेन 'यान्यन्यानि यथासुखं विहरतोरूपाणिसर्वाणि तान्याहुस्स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते' इत्यन्तिम श्लोकवर्णितरीत्या नित्ययुक्तयोरनयोः प्रायेणगाढोपगूढत्वेन वर्तनं सूचितं भवति । तयोस्तद्विग्रहयोर्वा जनताहश्यत्वेऽत्यन्तमनौचित्यंभवेत् । सर्वलोकाः अन्धाः एतद्दम्पतिदर्शनविषये । भगवतस्स्वरूपतिरोधानकरी माया यवनिकाभूय चर्मचक्षुषोजनान् तद्वीक्षणात्यन्तासमर्थान् कृत्वा दम्पत्योः गाढोपगूढादीन्यत्यन्तं गूहयति । 'मायायव नकाच्छन्न' मिति भागवते । 'भूयश्चान्ते विश्वमाया निवृत्तिः' इति श्वेताश्वतरे मायायाः विश्वजनमनोनयनतिरोधायकविश्वमायात्वं निगदितम् । अस्मिन् श्लोके कीर्तिता

यवनिका विश्वमाया सर्वजगन्मोहिनी। विश्वस्मिन् नैकोपिमाया तिरस्करिण्यतिरोहितोऽस्ति एतेन योगमाया समावृतत्वात् दिव्य-मिथुनस्य माययाऽपहृतज्ञानानां जनानां एतद्दम्पती विहारदर्शनस्य न प्रसक्तिः। विजितमायानां विमलमनसां दर्शनपथप्राप्तौनैतयो-र्विहाराणां कश्चिदपायः। विमलमनसां तेषां चित्तमपि पूर्वकीर्तित फणिपतिवत् वेदमौलिवच्च स्वयमपि मिथुनविहारशय्या भवन्तीति पूर्वोदाहृतश्रीस्तुतिश्लोके गीतम्। अनयोरात्ममिथुनयोर्ज्ञानानन्द परीवाहमयज्ञानतदवस्थामात्रभूतविहाराणां न प्राकृतत्वगन्ध-लेशोपिशक्यशङ्कः॥

'ब्रह्मेशादिसुरव्रजः'––पूर्वार्धेनित्यविभूतिस्तन्नायकत्वं चोक्तम्। तस्याः स्वयं प्रकाशत्वेऽपि माययाऽपहृतज्ञानाय विश्वस्मै अप्रकाश-मानत्वं चोक्तम्। अत्र लीलाविभूतौ ब्रह्मेशादीनां सुरमुख्यानां तन्महिषीणां च दिव्यमिथुननियाम्यत्वेनान्तर्गतत्वं समेषां तेषां तन्मिथुनदासत्वं च कीर्त्यते। प्रथमं पूर्वार्धे शेषाग्रगण्यस्य शेषत्व-मुक्तम्। प्रभुसंमितस्य विश्वशासितुः वेदस्य चास्मद्बुद्धिसमीपं वाहनी भवनेन शेषत्वमुक्तम्। अस्मान् परब्रह्मसमीपवाहयितृ शब्दब्रह्म। 'शब्दब्रह्मणि निष्णातः परंब्रह्माधिगच्छति।' 'शब्द-ब्रह्मणि निष्णातो न निष्णायात्परे यदि। श्रमस्तस्यविफलः अधेनुमि-वरक्षतः' इति श्रीभागवते। अत्र दिव्यमिथुनस्य ब्रह्मेशादि सर्वदेवतोपास्यत्ववर्णनेन मनुष्यादीनामप्युपास्यत्वं किंपुनर्न्याय-सिद्धम्। द्वितीयश्लोके 'नृणां' इति मनुष्यकीर्तन पूर्वकं मनुष्य-सामान्यस्य एतन्मिथुनोपासनेन चतुर्विधफलप्राप्ति संभावना,

तद्भिना तदसंभावना च गीयेते । मनुष्याधिकारं शास्त्रमिति बोधयत्सूत्रमपि नृणामितिपदेन सूच्यते । तदुपर्यपिदेवमुख्यानां मोक्षार्थं तदुपासनकर्तव्यतायाः निर्णायकं देवताधिकरणं मध्वाद्यधिकरणद्वयं सूच्यते प्रथमश्लोक तृतीयपादेन। अत्र तेषामपि प्रत्यगात्मनां, 'दासभूतास्स्वतस्सर्वेह्यात्मानः परमात्मनः । अतोऽहमपितेदासः इति मत्वानमाम्यहम्' इत्यहिर्बुध्न्यवचनेन दास्यैकस्वरूपत्वंकथ्यते । विश्वाचार्याः विधिशिवमुखाः इदं तत्त्वं स्पष्टं गृणन्ति । स्वस्वरूपभूतायाः दास्यनिष्ठायाः स्वयमाचरणं च वेदयन्ति अस्मान् तदाचारेस्थापनाया समुदायवाचिनां व्रजशब्देन सर्वेषां देवानां तन्महिषीणां च वर्तमानं मिथस्तारतम्यमगणयित्वा ईश्वरमिथुनंप्रति एकराशित्वेन ऐकरूप्येण दासभूतत्वं द्योत्यते । मिथोभूयस्तारतम्यवन्तो ब्रह्मादिदेवाः ईश्वरमिथुनदास भूतैकवर्ग घटकाभवन्ति अविशेषेण । इदमेव व्यञ्जितमुदाहृताहिर्बुध्न्यसंहितावचनेन सर्वेषामात्मनां स्वतोदासभूतत्वात् तदविशेषेण तद्वदेव तत्सामान्येन महेश्वरस्यापि स्वस्य स्वतोदास भूतत्व कीर्तनेन ॥

'सदयितः'—नकेवलं दासास्ते, तत्पत्न्योपिद स्य एव । देवास्सर्वेस्वदयितासहिताः कुटुम्बी भूय तद्दास्यं परमादरेणानुतिष्ठन्ति । देवगणस्सर्वोपितद्दासगणः, देवदयितागणस्सर्वोपि तद्दासीगणः । 'देवतिर्यङ्मनुष्येषु पुंनामा भगवान् हरिः । स्त्रीनाम्नी श्रीश्च विज्ञेया नानयोर्विद्यतेपरम् ।' इति पराशरेण भगवता सर्वेषां पुंसां हर्यंशत्वं, सर्वासां स्त्रीणां लक्ष्म्यंशत्वं च विभज्येवकथितम् । स्त्रीपंस-

योरंशत्वे । दम्पत्योर्मिथः पराशरकथितरीत्या विभागे सत्यपि स्त्रीणां पुंसां च सर्वेषां दम्पत्योरविभागेन दासत्वमस्त्येव । देवेति श्लोकस्य, 'सर्वस्योभयात्मकत्वेपि तत्राऽऽभिमुख्यातिशयविशेषात अर्थवाण्यादीनां तदात्मकत्वमुक्तम्' इति श्रीविष्णुचित्तीय-व्याख्यया इदमनुगृह्यते । देवतिर्यङ्मनुष्येष्वित्यत्र शास्त्राधिकार-भाजो देवमनुष्याः तदनधिकृताः तिर्यञ्चश्च कीर्त्यन्ते । शास्त्रा-धिकार्यनधिकारिणामपि सर्वेषां प्राणिनामीश्वरमिथुनदास्यमेव स्वरूपम् । 'अकारेणोच्यते विष्णुः उकारो लक्ष्मिवाचकः । मकारस्तु तयोर्दासः इति प्रणवलक्षणम्' इति श्रुत्या सर्वेषां स्त्रीपुंसां अवि-शेषेणोभयदासत्वं श्रावितम् । इदं स्पष्टं विव्रियतेऽत्र श्लोके सम्बो-ध्यमानलक्ष्मीदास्यकथनेन । दासगणः इत्येतावन्मात्रोक्तादपि दासदयितानां दासीनामपि दासगणेऽन्तर्भावो लभ्यत एव । दासी-त्यधिकोक्त्या स्त्रीपुंभेदागणनेन सर्वेषां देवात्मनामभयदासत्वं स्पष्टी क्रियते ॥

'श्रीरित्येवचनाम ते'—उभयविभूतिशेषित्वेनोत्कर्षः उक्तः श्रियाः तद्भर्तुश्च । स चोभयोस्साधारणः । अत्र श्रीरितिनाम्नै-वास्याः उत्कर्ष उच्यते एतन्नाम्नाऽस्याः पुरुषकारत्वरूपा साधारणा-कारेण भगवत्तोप्यधिकउत्कर्षः प्रतिपाद्यते । आकारत्रय सम्पन्नाश्री आकारद्वयसंपन्नो भगवान् । श्रीशब्दस्यार्षनिर्वचनेनानेकार्थाः प्रति-पादिताः ॥

'शृणाति निखिलान् दोषान् शृणाति च गुणैर्जगत् । श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् । श्रयन्तीं श्रीयमाणां च शृण्वतीं

शृणातीमपि ।' इति स्मर्यते । 'श्रीङ्सेवायाम्' 'शृविस्तारे' 'शृहिंसायाम्' 'श्रु श्रवणे' इत्यादि धातवः । प्राणिभिर्यद्यावदपेक्ष्यते स्वरक्षणविषये तत्सर्वमेतद्धातुभिस्समर्प्यन्ते । यद्यपि भगवान् 'श्रियः श्रीः इति रामायणे वर्ण्यते केवलं श्री नाम श्रिया एव श्रीरित्युपपदपूर्वकत्वादेवोत्कर्षवतां सर्वेषामुत्कर्षः पूज्यत्वं च समर्प्यते । शङ्करचतुर्मुखादीनां 'श्रीशङ्करः श्रीचतुर्मुखः' इतिश्र्युपपदेनैव श्रीमत्वकथनं प्रसिद्धम । 'श्रीशङ्कराचार्यनवावतारं' इत्यत्र श्रीपदस्थाने उमादिपदनिवेशोनशक्य संभवः । 'उमाशङ्कराचार्य' इत्यादिप्रयोगाः न सन्ति । श्रियो महिमा तन्नामैकव्युत्पत्तिद्वारा प्रसिद्ध्यति । नाम्नोऽभिधेयद्वारा यो यो महिमा स सर्वः नामवत्या भवति अस्याः महिमकार्त्स्न्यं वाङ्मनसाऽगोचरम् । श्रीशब्दश्रवणे, कैराश्रीयते, कमाश्रयते, किमर्थमाश्रीयते, किंश्रुणोति, कंश्रावयति, किंशृणाति, किंशृणाति इति बहुविधा आकाङ्क्षाः जायन्ते । एता आकाङ्क्षाः पूर्यन्ते निर्वचनव्युत्पत्तिभ्याम् । असङ्कोचन्यायेन सर्वैः सर्वफलार्थमाश्रीयते आश्रितानां सर्वदोषान् हिनस्ति अपगमयति आश्रितान् सर्वैर्गुणैः शृणाति । श्रीः श्रेयो मूर्तिः श्रेयांसि च असंकोचेन सर्वश्रेयांसि 'भगवति' इति संबोधनपदेन भगवच्छब्दः भगवतीवास्यामपि मुख्यवृत्त इतिव्यज्यते ॥

'ब्रूमः कथं त्वां वयम्'—त्वां त्वन्महिमानं च कथं वयं याथार्थ्येन वर्णयेम । ब्रूम इत्यस्य स्तुतिवाचं ब्रूम इत्यर्थो ग्राह्यः स्तुतिप्रकरणत्वात् स्तोत्रान्तर्गतत्वात् अत्र स्तुतिशक्त्यभावः कथ्यते अनन्तरश्लोके च तत्प्रतिपाद्यते इत्थं च चतुर्षु श्लोकेषु श्लोकद्वयं

स्तुतिशक्त्यभावप्रतिपादकम् तयोः स्तुतिरूपमस्ति काष्ठागतत्वेन ॥

प्रथम श्लोकस्यास्य शारीरकप्रथमाध्याय विषयप्रतिपादकत्व-मिष्यते । श्रियः कान्तः पुरुषोत्तमः इत्याभ्यां ब्रह्मशब्दार्थ उच्यते । जन्मादिसूत्र विषयवाक्ये 'यदभिसंविशन्ति जातानि भूतानि सर्वाणि परम' प्राप्यतया मुक्तौ, तत्र लक्ष्मीनारायणद्वन्द्वमीश्वर-तत्त्वभूतम् । दम्पत्योरुभयोः ईश्वरत्वं शेषित्वं प्राप्यत्वमित्यादिकं च सर्वमुभयोस्सहैव । व्यासज्य वृत्तयस्ते सर्वे ईश्वरधर्माः । 'अस्या मम च शेषंहि विभूतिरुभयात्मिका ।' इत्युभयविभूतिशेषित्व-मुभयोस्सहैवेतिपादत्रयेणात्र श्लोके स्पष्टम् । प्रतिपाद्यते अनयो-र्दास्यमेव नित्यमुक्त बद्धानां सर्वात्मनां स्वरूपम् । मुक्तावपि मिथुन-प्रीत्युद्देश्यककैङ्कर्यं आनन्दपरीवाहरूपम । वेदात्मा विहगेश्वरो-ऽस्मद्बुद्धिसमीपं वाहयति तदितिकथनेन शास्त्रयोनित्वाधि-करणं संगृह्यते । शास्त्रयोनित्वादितिहेतोः शास्त्रैकयोनित्वा-दित्यर्थः । शास्त्रैकयोनित्वाभावे शास्त्रयोनित्वं न सिद्ध्येत् । अप्राप्तेहि शास्त्रमर्थवदिति न्यायात् । यवनिका माया जगन्मोहिनी इति परमप्राप्यभूतेश्वरमिथुनप्राप्तेर्विरोध्युच्यते । दुरत्ययेयं गुणमयी वैष्णवी माया । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति ब्रह्मप्रपत्त्यैव विश्वमायानिवृत्तिसंभवः । तृतीयपादेन देवताधिकरणं मध्वधिकरणं च संगृह्येते ॥

अभयप्रदानराजपुत्र इति प्रख्यातस्य आच्चान्पिल्लै आचार्यस्य व्याख्यानतस्सारभूतान् विषयानत्र संगृह्णीमः (१) स्तोत्ररत्ने 'भगव-द्वन्दनं त्वाद्य' गुरुवन्दन पूर्वक' मितिवचनमनुसृत्य श्लोकत्रयेण

गुरुवन्दनं कृतम् । वन्दितो गुरुः मुनिनाथः स्वस्य प्राचार्यः, न साक्षात्स्वाचार्यः । अखिलतमः कर्शनस्य संस्कृत द्राविडोभय वेदान्तावलम्बिनोऽस्मद्दर्शनस्यास्माकमादिज्ञापकः । अतएव नाथोपज्ञं प्रवृत्तमिति सम्प्रदायविदः । गुरुपरम्परा स्मरणव्यापारे आचार्य प्राचार्ययोर्वृद्धौ संनिधाने 'आचार्यप्राचार्ययोस्सन्निपाते उपसंजिघृक्षेदाचार्यम्, प्रतिषेधेदितरः' इति वचनमनुसृत्य प्राचार्य वन्दनं क्रियते आचार्य वन्दनं च न क्रियते ॥

(२) रामायणे बालकाण्डान्तिमश्लोके 'उत्तमराजकन्यये' ति सीता वर्णिता विभुः श्रिया विष्णुरिवामरेश्वरः' इति श्रीस्तत्रोपमानतया निर्दिष्टा । श्रीरेव सीतात्वेन भगवतो राघवत्वेनावतरणे सहावतीर्णा । उत्तमराजकन्यायाः पुरुषोत्तमस्यैव कान्तत्वमुचितमिति व्यञ्जितम् स्तुत्यारम्भ एव । 'अहं श्लोककृत्' इति मुक्तौ ब्रह्मविषय श्लोकरचनं तद्गानं चानन्दपरीवाहतया क्रियते । मुक्ततुल्यैराचार्यैरत्रापि तथैव उत्तमश्लोकविषयश्लोककरणगानादिभिः दिवसाः अपवर्गदशासमतयाऽतिवाह्यन्ते ॥

(३) स्तोत्ररत्नं सर्वभगवत्स्तोत्राणां यथामार्गदर्शि, तथा श्रीस्तोत्राणामियं मार्गदर्शिनी ॥

(४) 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्वेताश्वतरान्तःपठितश्लोके भगवतः चतुर्मुखब्रह्मस्रष्टत्वं श्राव्यते। 'यं कामये तंतं उग्रं करोमी' ति उग्रनाम्नः ईशस्य श्रियाः कटाक्षेण रुद्रपदाधिकारभाक्त्वं श्राव्यते । विष्णुपुराणान्ते भगवच्छब्दस्य प्रत्यक्षरमर्थकथनेन भगवति मुख्यत्वप्रतिपादकाः श्लोकाः आचार्येण-

त्रोदाहृताः चतुर्थपादस्थसंबोधनरूपभगवतिशब्दव्याख्याने । यद्य-
त्पत्युस्तत्सर्वं पत्न्याश्च भवति । 'तदन्तर्भावित्वात् न पृथगभिधत्ते
श्रुतिरपि इति भट्टपादैः कथितो न्यायः प्रसिद्धः ॥

मिथुनशेषत्वं सर्वचेतनसाधारणमिति सर्वैराप्तैरुपपादितम् ।
श्रीभाष्यप्रथममङ्गलश्लोके 'ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन्-
शेमुषी भक्तिरूपा' इति प्रार्थिता भक्तिशेमुषी श्रीनिवासोद्देश्यक-
त्वात् श्रीसन्निहित भगवद्विषयिणी इति भाष्यकाराभिप्रायः
इत्यप्यनुगृहीतम् । अत्र प्रार्थिता भक्तिः साधनभक्तिरिति श्रुतप्रका-
शिकानिष्कर्षः । तुरीयपादस्य तृतीयाध्याय चतुर्थाध्याय प्रथमभाग-
प्रतिपादितसाधनभक्ति विषयकत्वं स्ववगमामिव ॥

'फणिपतिः शय्या' फणिपतिः पर्यङ्को भवति । सुषुप्त्यवस्थायां
प्रत्यहं यदा यदा वयं स्वपिमः तदा तदा हृदयगुहावस्थितो
भगवान् देहेन्द्रियादिसम्बन्धस्मरणरहितानामस्माकं केवलात्म-
स्वरूपस्य पर्यङ्को भवतीतिसद्विद्याद्युपनिषत्प्रसिद्धम् । 'तदभावो
नाडीषु तच्छ्रुतेरात्मनिचे' तिसूत्रे सर्वे भाष्यकाराः, 'आत्मनिचेति'
सूत्रखण्डस्य हार्दपरमात्मनः पर्यङ्करूपसुषुप्तिस्थानत्वमपारकरुणा-
वात्सल्याभ्यां भगवताऽऽविष्क्रियत इति सूत्रकारस्य विस्मयरसः
च शब्देन द्योत्यत इति सूचयन्ति । हिता नाम नाड्यः, पुरीतद्रूप-
हृदयमांसवेष्टनं, केवलजीवस्वरूपस्य विस्मृतदेहादिसम्बन्धरूपबन्ध
प्रयुक्तसंसारस्य स्वपतः अन्तरात्मभूतहार्दपरमात्मा च सुषुप्तिस्थानं
सम्पद्यन्ते । प्रासादखट्वापर्यङ्करूपोपमा च प्रदर्श्यते सर्वैर्भाष्यकारैः
एतेषां त्रयाणाम् । त्रिष्वेतेषु परमात्मैव साक्षात् सुषुप्तिस्थानं

भवति। इतरयो र्द्वयोस्तत्प्रापकत्वं मार्गभूतत्वेन। 'ब्रह्मैव साक्षात् सुषुप्तिस्थानम्' इति तत्र श्रीभाष्यम् । अतस्सएवास्मच्छयनाय पर्यङ्को भवति। संसारदशायामित्थमनन्तकोटिजन्मसु प्रतिनिशं स्वापदशासामान्ये नैयत्येन पर्यङ्कीभवनमनुगृहीतवतो भगवतः, 'कृते च प्रतिकर्तव्य' मिति न्यायमनुसृत्य शेषत्वमार्गे ऽस्माकमनुष्ठानप्रापकाचार्यभूतेन फणिपतिना सर्वेषामस्माकमानृण्यसम्पत्तये अनाद्यनन्तकालं सर्वदा पर्यङ्कीभूयते । तत्कैङ्कर्यस्य तस्मिन्नेकस्मिन्नेव नियतत्वेपि, 'अशेषशेषतैकरसते' ति गद्योक्तरीत्या परमपदे सर्वेषां नित्यमुक्तानां सर्वेतरनिर्वर्तितसकलकैङ्कर्याणां कैङ्कर्ये साक्षादनन्वितानामपि कैङ्कर्यनिर्वर्तयितृलब्धरससमानरसकात्स्न्यं सिद्ध्यति ॥

अत्र श्लोके पठितमासनं च कौषीतकीपर्यङ्कविद्याप्रदर्शितपर्यङ्काह्वयसिंहासनं कमलया सह भगवताधिरूढम् । भगवतः गमनाद्यवसरेषु गमनसाधनपादुकारूपत्वमपि शेषेण नियतं धार्यते । तथा च भगवतो भक्तजनसमीपं वाहयितृत्वमपि सिद्ध्यति । पादुकायाः कोसलराजत्वेन मूर्धाभिषेकः लक्ष्मणस्य राज्याभिषेक इव भवति। 'यदि राज्यस्य हेतो स्त्वमिमां वाचं प्रभाषसे। वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयताम् । उच्यमानोपि भरतो मया लक्ष्मण तत्त्वतः। राज्यमस्मै प्रयच्छेति बाढमित्येव वक्ष्यति।' इति रामवाक्यं सत्यापितं पादुकाभ्यां पट्टाभिषेक निर्वर्तनरूपवृत्तान्तेन। शेषस्य लक्ष्मणरूपत्वेनावतीर्णत्वं प्रसिद्धम्। शेषो लक्ष्मणः पादुकाद्वयं च । अतः पादुकयोरभिषेकस्तत्त्वतो

लक्ष्मणस्याभिषेकोपि भवति । स्तोत्ररत्ने 'निवासशय्यासन-पादुकांशुकोपधानवर्षातपवारणादिभिः । शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीर्यते जनैः । इति श्लोके निवासपदं पर्यङ्क-विद्याप्रदर्शितसिंहासनवाचकम् । सिंहासननामैव पठितं निवास-पदस्थाने सरोमुनिद्रमिडगाथायां स्तोत्ररत्नश्लोकमूलभूतायाम् । तत्रोभयत्र पठितानि अत्र चतुःश्लोकीश्लोकेऽपठितान्यन्यान्युप-लक्षणविधयाजिघृक्ष्यन्ते ॥

वाहनमितिपदं मध्यमणिन्यायेन फणिपतिना विहगेश्वरेण चान्वेतुं शक्यम् । तदर्थमेव तस्य फणिपतिविषयकपदेषु चरमत्वेन, विहगेश्वरविषयकपदेषु प्रथमत्वेन च निवेशनं कृतमिव । पादुकासहस्रे पादुका भगवन्तं भक्तसमीपं वाहयितुं भूयोभूयः प्रार्थ्यते । 'वाहनं वेदात्मा विहगेश्वरः' अत्र वेदस्या-न्तिमभागभूतोपनिषदामस्मत्कर्णेषु भद्रभद्रतया निपतन्तीनामर्थ-ज्ञानोत्पादनेनास्मद्बुद्धौ अत्यन्तसमीपं भगवत्स्वरूपस्य वाहयितृत्वं प्रसिद्धम् । बुद्धिसमीपं प्रापणमेव मुख्यम् । तादर्थ्यमेव वेदान्ता-नामुपनिषदाम् । 'उपोपसर्ग स्सामीप्ये' । शब्द ब्रह्मरूपवेदवेदान्त-स्वरूपी भगवान् सुपर्णो गरुत्मान् शब्दगुणे आकाशे निपत्य कर्णशष्कुल्यवच्छिन्नाकाशभूतास्मच्छ्रोत्रे आचार्यस्य मधुमत्तम-जिह्वाग्रात् अस्मद्भाग्यवशात निपतति । विहगशब्दः आकाश-पतत्पक्षिवाचकः । 'नभः पतन्त्यात्मसमं हि पक्षिणः' इति भागवत-कथाकथनारंभे सूतस्य स्वशक्तेरल्पत्वकथकविनयसूक्तिः । विहा-यसा गच्छतीति विहगः । विहगेश्वरो विहगपतिः । विश्वरति-

रात्मेश्वरस्त्वत्कान्तः । फणिपतिरहीन्द्रोऽहीश्वरस्तावकशय्या, आसिकाभूतसिंहासनं च। प्रजाभूतानां मुमुक्षूणां स्वस्वपतिरूपश्रावकलक्ष्मणाचार्यादिरूपेणावतीर्णमाचार्यरूपवाहनम् । 'बाहुं भुजगभोगाभमुपधायारिसूदनः। अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः।' इति महर्षिणा शेषस्य भगवतः सागरपुलिनशयने उपधानभूतत्वमुपमानविधया व्यञ्जितम् । 'आविवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुनः। स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधान एष ते।' इत्युत्तररामचरितप्रथमाङ्कान्तभागे सीतां ब्रुवन् रामः प्रतिशयनावसरपठितमहर्षिश्लोकरीत्या स्वबाहोः शेषभुजगाभत्वं मनस्यकरोदिति उल्लेखनं शक्यम् ॥

वर्षातपवारकच्छत्रत्वं, 'शेषोऽन्वगात् वारिनिवारयन् फणैः' इति कृष्णवाहे वसुदेवे कंसकारागृहात् गोकुलं प्रतिगच्छति, पर्जन्ये वर्षति, शेषस्य वर्णितम् । लक्ष्म्याः वक्षसि नित्य योगरूपसततसंनिहितत्वस्य सदा सिद्धत्वात् गार्हस्थ्यात्यन्तविरुद्धब्रह्मचर्यवेषस्य वामनावतारे परिग्रहेऽपि तदाश्रमप्रत्यायकानिश्चितचिह्नभूतकृष्णाजिनेनैव, 'कृष्णाजिनेन संवृण्वन् श्रियं वक्षः स्थलस्थिताम्' इति पराशरोक्तरीत्या स्वमाया शक्त्या समावृणोदिति प्रसिद्धम्। कदापि न जह्यां त्वां, न त्वां क्षणमपि हातुमहं समर्था, हानप्रसङ्ग एव कदापि मम मा भूत इति वदन्ती सा भर्त्रा ब्रह्मचर्याश्रमपरिग्रहेऽपि सुदृढं गूढं तत्रैव स्थितेति व्यज्यते 'वक्षः स्थलस्थिता' मितिपदेन । स्वल्पकालमसंनिहिता भवेति भगवता प्रोक्तापि, न पारये क्षणमात्रवियोगमपीति कथयन्ती नैवोरसोऽपा-

सर्पत । तस्मात् 'बभूव प्राकृतः शिशुः' इति प्राकृतार्भकीभवन-दशायामपि तया सह युक्तत्वादुभयोः छत्रत्वकैङ्कर्यं निर्वर्तितं शेषेणेति साम्प्रतं वक्तुम् । परमपदे पर्यङ्कीभूतसिंहासने उभयोः छत्रत्वं नित्यमुक्तसर्वसूरिलोकसाक्षिकं प्रदर्श्यते । श्रीसूक्तादिकं, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति पुरुषसूक्तोत्तरानुवाकश्रुतिः, 'श्रद्धया देवो देवत्वमश्नुते' इत्यादिश्रुतयश्च भर्त्रा सह लक्ष्म्याः परतत्त्वत्वबोधकानि प्रमाणानि । तानि श्रीतत्त्वस्वरूपं अस्मत्कर्ण-समीपं वाहयन्ति ॥

'श्रीरित्येव च नाम ते' केवलं श्रीपदं तवैव नाम भवति । श्रीपदं आर्षनिर्वचन श्लोकप्रदर्शितरीत्या न केवलं त्वयि योगपौष्कल्यद्योतकं, किन्तु कैवल्येन त्वय्येव रूढं नाम भवति । महिमवतामितरेषां सर्वेषां त्वन्नामभूतश्रीशब्दरूपोप-पदपूर्वकत्वेनैव मङ्गलभाक्त्वं, महिमभाक्त्वं च । 'यद्यद्विभूति-मत् सत्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं ममतेजोंश-संभवम् ।' इति भगवता महिमवतां सर्वेषां महिम्नस्स्वतेजोंश-संभवत्वं गीतम् । भगवतस्तेजसः अप्रमेयत्वं कुत इति पृष्ट्वा मारीच मुखेन रावणं प्रति, 'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा' इति बोधनेन महर्षिणा त्वत्पतित्वमूलत्वं कथितम् । शूर्पणखयापि, 'यस्य सीताभवेद्भार्या यं च दृष्ट्वा परिष्वजेत् । अतिजीवेत्स सर्वेषु लोकेष्वपि पुरन्दरात्' इति मारीचाश्रमात् प्रति निवृत्तं रावणं प्रति मारीच प्रोक्तसीतामहिममूलत्वानुसारेण रावणसभामध्ये उद्घोषितमपीह भाव्यम् । श्रयुपपदपूर्वकत्वेनैवेतरेषां सर्वेषां महि-

मवत्वाय माङ्गलिकत्वाय च निर्देशः क्रियत इति चतुःश्लोकी-भाष्ये आचार्यैरनुगृहीतम्। इदं सर्वं 'श्रीरित्येव च नाम ते' इति एतत् प्रथश्लोकखण्डेन विवक्षितम् । श्रीरित्येवेत्यत्र एवकारेण श्रीपदस्य कैवल्यमितरेषां निर्देश इव उपपदत्वाभावश्चाभिधीयेते। श्रीरिति ते एव नाम इत्यप्यन्वयोऽभिप्रेयते। इतरेषां तत्तन्नाम-पूर्वमुपपदत्वेन निर्देशमात्रम्। तेषां सर्वेषां महिमा माङ्गलिकत्वं च त्वन्नामभूतश्रीशब्दस्योपपदत्वेन निर्देशेनैव संपद्यते । 'हे श्री देवि ! समस्तलोकजननि ! त्वां स्तोतुमीहामहे' इति श्रीस्तवे 'हे श्रीः' इति श्रीनाम्नैव श्रीस्सम्बोध्यते तन्निरतिशयमहिम-प्रदर्शनाय। 'ब्रूमः कथं त्वां वयम्' इति श्रीनाम्न्यास्तव बोध्यमानो निरतिशयमहिमा कथमस्माभि र्यथावद्वर्णयितुं शक्यमिति सम्य-क्तत्त्वगुणाभिवर्णनरूपलक्षणवत्याः स्स्तुतेरशक्यत्वं व्यज्यते । वयमित्यनेन, 'यदेकैकगुणप्रान्ते श्रान्ता निगमवन्दिनः । यथा-वद्वर्णने तस्य किमुतान्ये मितम्पचाः' इति यादवाभ्युदयप्रथमसर्ग-श्लोक इव मितम्पचा वयमित्यर्थोग्राह्यः ॥

**यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोपि प्रभुः**
**नालं मातु मियत्तया निरवधिं नित्यानुकूलं स्वतः ।**
**तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयो**
**लोकैकेश्वरिः लोकनाथदयिते दान्ते दयां ते विदन् ॥**

पूर्वश्लोके भर्तुरिव देव्या अपि उभयविभूतिनायकत्वमुक्तम् । तत्र पूर्वार्द्धे नित्यविभूतिनायकत्वं, उत्तरार्द्धे प्रथमपादे ब्रह्मेशयो-स्स्वर्गिणां च महेन्द्रादीनां तद्दयितानां च दासदासीत्वकथनेन

तान्प्रति वचनवृत्त्या स्वामित्वं कैमुत्यविधया देवतान्तरमनुष्या-
दीन् प्रति नायकीत्वं च निरूपितम् । च्छान्दोग्यभूमविद्यायां,
'गो अश्वं हस्तिभार्यं महिमेत्याचक्षते स भगवः कस्मिन् प्रतिष्ठित'
इति पृष्ट्वा, स्वे महिम्नि प्रतिष्ठितः अथवा न महिम्नि इति निग-
दितम् । महिमशब्दस्य अश्वहस्त्यादिवाहनेषु लोकप्रसिद्धिः स्तत्र
प्रोक्ता । 'यस्यास्ते महिमान' मित्यस्मिन् श्लोके महिमशब्देन
पूर्वश्लोकोक्तवाहनासनशय्यादीनामनुवादः क्रियत इति रसो रम्यः ।
'स्वे महिम्नि इति श्रुतौ स्वकीयो महिमा स्वप्रतिष्ठाधिकरणत्वेन
कथितः । तत्राऽप्यतृप्त्या स्वस्मिन्नेव प्रतिष्ठितः न स्वान्यत्वेन
ग्राह्यो स्वधर्मभूतस्वमहिमनि इति कथितम् । अनन्य प्रतिष्ठो भूम-
शब्दितो भगवानिति स्वमात्रप्रतिष्ठितत्वप्रतिबोधनाय 'अथवा न
महिम्नी' ति निगदितम् । 'ब्रह्मणो महिमानमाप्नोति' इति फल-
श्रुताविवात्रस्थमहिमशब्दः निरतिशयंब्रह्मानुभवं गमयेच्च । यस्या-
नुभावमधिगन्तुमशक्नुवन्तः' इति वरदराजपञ्चाशत श्लोक इव,
'अनुभावविशेषात्तु सेनापरिवृताविव' इति रघुवंश श्लोक इव च
महिमानुभावशब्दौ महिमार्थवाचकौ । महिमशब्दगम्यप्रसिद्धार्थ-
वाचकौ । 'तत्त्वेन यस्य महिमार्णवशीकराणुः शक्यो न मातुमपि
शवपितामहाद्यैः । कर्तुं त्वदीयमहिमस्तुतिमुद्यताय मह्यं नमोऽस्तु
कवये निरपत्रपाय ।' इति स्तोत्ररत्नश्लोकस्थमहिमशब्दोऽप्यत्र-
महिमशब्दार्थबोधनाय भाव्यः । तच्छ्लोकस्य एतच्छ्लोकदृष्ट
वर्णनरीतिसादृश्यं रम्यम् । तत्र सर्वज्ञानां विश्वाचार्याणां शिव-
विधिमुखानां भगवन्महिमार्णवपृषतस्यापि मातुमशक्यत्वं

कथितम् । अत्र भगवत एव स्ववल्लभाभूतश्रीमहिम्नः इयत्तया मातुमसमर्थता वर्ण्यते । भगवतः स्वमहिम्नः परिच्छेदासामर्थ्यं सम्प्रतिपन्न दृष्टान्ततयोक्तं 'आत्मन इवे' ति ॥

अस्मिन् श्लोके पूर्वार्द्धं श्रियो लक्षणवाक्यमपि भवति । ईदृशलक्षणलक्षितां तां तत्पदार्थभूतेश्वरीं वाङ्मनसापरिच्छेद्यमहिमवतीं सर्वतो विलक्षणां नारीणामुत्तमां त्वा मितिवर्णनरीतिः । 'आत्मन इवे' त्यनेन दम्पत्योरुभयोः परस्परमहिमपरिच्छेदाज्ञत्वासमर्थताभ्यां तुलारोपणे तुल्यत्वं व्यज्यते । स्व, स्वकान्तमहिमावध्यज्ञाने उभयोस्तुल्यता, यथा सार्वज्ञ्य वाङ्मनसागोचरानिरतिशयानन्दादिषु । 'त्वद्वल्लभः प्रभुरपि' अत्र प्रभुशब्दः परिबृढशब्दपर्याय इव । 'ब्रह्म परिबृढं सर्वतः' इति यास्कपठितं स्मार्यत इव प्रभुशब्देन सर्वतः प्रभुरपि सर्वकार्यनिर्वहणे कृतमुखोपि त्वद्वल्लभः प्रभुरिति पदक्रमेण त्वद्वल्लभत्वात भगवान् सर्वतः परिबृढः प्रभुरिति व्यज्यते । 'श्रीमान् लोकत्रयाश्रयः' इति सहस्रनामपदयोः क्रम इवात्र पदक्रमो द्रष्टव्यः । श्रीमत्वात् लोकत्रयाश्रयत्वम् । आश्रयपदं श्रियां मुख्यम् । श्रीशब्दव्युत्पत्तौ प्रथमप्रतिपन्नम् । प्रभुरपि नालं मातुं त्वन्महिममानविषयेऽप्रभुः । अलं मातुं पर्याप्ततया कात्स्न्र्येन तत्त्वतो मातुमप्रभुः । इयत्तया मातुमप्रभुः । 'प्रकृतैतावत्त्व' सूत्रप्रदर्शितरीत्या एतावत्त्वेन मातुमसमर्थतात्र ग्राह्या । 'ईदृकृतया वा इयत्तयावे' त्यन्यत्रपठितमनुसृत्यात्र इयत्तयेति पदेनोपलक्ष्यत्वं ग्राह्यम् ॥

निरवधिमिति हेतुगर्भं विशेषणम् । वस्तुतोत्र महिम्नोऽनवधेर-

भावात् सावधित्वस्यापारमार्थ्यात् । अपरमार्थग्रहणरूपभ्रान्तिर्वा पद्येत देवीमहिम्नः इयत्तया परिच्छेद्यत्वमनने वर्णने वा । ज्ञानाभावरूपाज्ञानात् विपरीतज्ञानरूपभ्रान्तेः दोषगरीयस्त्वं सुवचम् । इदं सुविशदमुपपादितं, 'देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते यद्यप्येवमथापि नैव युवयोस्सर्वज्ञता हीयते । यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञतायाविदुः व्योमांभोजमिदंतया किल विदन् भ्रान्तोऽयमित्युच्यते ।' इति श्रीस्तवे श्रीवत्साङ्क मिश्रैः । सत एव वस्तुनोऽज्ञानं दोषावहम् । असतो वस्तुनो वेदनाभावः न सार्वज्ञ्यविरोधी । असद्वस्तुनो वेदनं सर्वथा सार्वज्ञ्यविरोध्येव भवेत् । अतः वन्ध्यासुतशशशृङ्गाद्यवेदनं गुणायैव स्वतो नित्यानुकूलस्त्वन्महिमा त्वद्वल्लभस्य । यदि जातु प्रतिकूलः स्यात् त्वन्महिमैकदेशोपि तस्य, तदा तदंशावेदने तदंशविस्मरणे वा कथञ्चित् कश्चित हेतुरुत्प्रेद्येत । त्वन्महिम्नस्तस्य नित्यमनुकूलत्वात् त्वन्महिमैकदेशविषये ऽप्यवेदनविस्मरणहेतुर्मृग्य एव । 'स्वतो नित्यानुकूलं' अनुकूलत्वमानन्दः भर्तुर्नित्यमनुकूलत्वं नित्यानन्दत्वं तव त्वदीयमहिम्नश्च स्वभावः । स्वत एव नित्यानुकूलत्वं न परतः यत्किञ्चिदुपाधेः व्याजाद्वा । स्वतस्सिद्धं नित्यानुकूल्यं सर्वथा सर्वदा निर्व्याजं निरुपाधिकम् । न कदापि भावशून्यत्वं, यथा 'उपचारविधौ मनस्विनीनां नतु पूर्वाभ्यधिकोपि भावशून्यः' इति मालविकाग्निमित्रश्लोके । सर्वदा पूर्णभावविशिष्टं भर्तर्यानुकूल्यम् । 'तां त्वां' 'नित्यानुकूलं स्वतः' इत्यत्रानुकूलत्वं सर्वप्रजाविषयेपि ग्राह्यम् । यथा भर्तरि तथा प्रजासु । तत्राप्यपराधिषु जडेषु

वत्सेषु। 'मन्ये माता जड इव सुते वत्सला मादृशे त्वं' इति दया-शतकश्लोक इव स्वतस्सहजस्नेहरूपवात्सल्यस्याधिकमधिकं प्रसरणं भवेत् जडापराधिषु सुतेषु मादृशेषु। स्वतो वत्सला धेनुर्वत्से। 'वत्सं धेनुरिव च्छाया वा सत्त्वं यथा अनुगच्छति' इत्येकायनश्रुत्या मुक्तविषये प्रदर्शितं, तथात्र सर्वप्रजासु स्वतो मातृभूतायाः स्नेह-मय्या देव्याः स्वतो नित्यानुकूलत्वम्। 'अनुग्रहमयीं वन्दे नित्य-मज्ञातनिग्रहाम्' इत्यादिकमिह भाव्यम्। 'नारायणेति यस्यास्ये वर्तते नाममङ्गलं। नारायणस्तमन्वास्ते वत्सं गौरिव वत्सला।' इति श्लोकोक्तनारायण वात्सल्यस्य मातृभूतदेवीवात्सल्यमूलत्वं सुवचम्। 'दास इति' स्वतश्शब्दोऽत्र दासशब्देनाप्यन्वेतुं शक्यः। दम्पत्योरुभयोः शेषत्वं दासत्वं च स्वतस्सिद्धमस्माकम् 'दासभूताः स्स्वतः स्सर्वे ह्यात्मानः परमात्मनः। अतोहमपि ते दासः इतिमत्वा नमाम्यहम्' इति नृसिंहराजपदस्तोत्रे विश्वाचार्येण सर्वज्ञेन रुद्रे-णोक्तमिहभाव्यम्। 'आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर' इति भगवतः स्वाम्यस्यात्मदास्यस्य च स्वभावसिद्धत्वं कथितम्। 'अस्या मम च शेषं हि विभूतिरुभयात्मिका' इत्यत्र 'अस्या' इति लक्ष्मीशेषत्वस्य सुनिश्चितत्वमत्यन्तमनपवाध्यत्वं सर्वलोकविदितत्वं च सुप्रसिद्धत्वेन प्रथमं पठितम्। मम चेति स्वस्यशेषित्वमन्वाच-येनोक्तम्। समीपवर्तिन्याः देव्यास्संनिधौ तस्यास्तादृशप्राधान्य-वर्णनं दक्षिणैकान्तनायकस्योत्तमगुण एव। 'त्वं स्त्री त्वं पुमानसि' इति श्वेताश्वतरश्रुतिः पुंस्त्वादपि स्त्रीत्वमेव प्रथमं निर्दिशति। स्त्रीणां विशेषतः माननीयत्वबुद्धिर्नेदानीन्तननवनागरिकत्वसिद्धा किन्तु

पुरातनवैदिकप्राचीनमर्यादा सिद्धा। नेयं नवनागरिकता, किन्तु प्राचीनवैदिकपद्धतिरेवेयम् । स्त्री सामान्यवाचकमेनाशब्दस्य 'मानयन्त्येनां (स्त्रियं) इति मेनाः सर्वाः स्त्रियः' इति यास्कनिरुक्त प्रदर्शिता स्त्री सामान्यवाचकत्वेन मेनाशब्दस्य व्युत्पत्तिः। अतएव पार्वती मातृहिमवत्पत्नी मेरुपुत्रीभूतमेनाविषये। 'मेनां मुनानामपि माननीयामात्मानुरूपां विधिनोपयेमे' इति कालिदासो जगौ। अस्य विस्तरश्चास्मदीये कुमारसंभवव्याख्याने द्रष्टव्यः ॥

श्रुतिपाठकत्वरूपवन्दित्वं पारम्पर्यप्राप्तदासकर्मेति प्रसिद्धम् । वन्दिकुलपरंपरासंभूताः वन्दिकर्मकराः दासाः स्तुतिकर्मणि निपुणा वा अनिपुणा वा भवेयुः। कुलप्राप्तकर्मकरणेऽनिपुणत्वं न तत्कर्माधिकारप्रच्यावकं भवेत् । कुलक्रमागतवैतालिककर्मकरपरम्परा दासस्यात्र दासशब्दार्थत्वेन ग्रहणं ध्रुवमुचितम्। पितामहनाथमुन्युपज्ञं अरयरत्वेन प्रसिद्धानां द्रमिडगाथाप्रबन्धस्य सतालं गानाभिनयनृत्तादिकैंकर्यनिर्वहणम्। इदानीमपि श्रीनाथमुनिकुलीनाः वंशपारम्पर्यक्रमेण तत्कैङ्कर्यं श्रीरंगे निर्वहन्ति। तत्कुलीनेषु संस्कृतकविताशक्त्यनुग्रहभाक्षु स्तोत्ररत्नैतत्स्तुत्यादिस्तुतिभिः दिव्यदम्पतिस्तोत्ररचनारूपकर्मकररूपदासत्वाभिमतिः साम्प्रतिक्येव। स्तोत्ररत्नारंभे प्रथमं त्रिभिः श्लोकैः पितामहं नाथमुनिं स्तुत्वा अन्ते च 'पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा' इतिस्वाभिलषितकृत्स्नप्रार्थनाज्ञापनरूपैतत्स्तोत्रोपसंहारे भगवत्प्रसादनिर्वन्धकहेतुत्वेन निर्दिष्टः श्रीरंगनाथमुनिना पितामहपौत्रत्वरूपसम्बन्ध इह भाव्यः। वक्तृवैलक्षण्याभावः वक्तृवैगुण्यमिति

दोषद्वयस्यापि परिहारे, नाथोपज्ञं प्रवृत्तस्यास्मद्दर्शनस्य प्रवर्तकभूतस्य 'यस्य नैगमिकं तत्त्वं हस्तामलकतां गतं' इत्युक्तरीत्या करबदरसमानमपरोक्षीकृतातीन्द्रियपरमात्मतत्त्वस्य योगिसार्वभौमस्य, स्वस्मै वेदान्ताचार्यकं कर्तुं स्वसमीपं स्वगृहमागन्तुमीश्वरमुनिं नियोजितवतः स्वोद्धरणाय करुणाकाष्ठां प्रदर्शितवतो मुनिनाथस्य श्रीरंगनाथस्य सम्बन्धनिर्देशः ध्रुवमुपकुर्यात्। संकल्पसूर्योदयनाटकप्रस्तावनायां स्वनाटकनाटनदर्शनाय मिलितायाः प्रेक्षकसभायाः अभिरूपभूयष्ठत्वनिरूपणे दिव्यप्रयोगदिदृक्षादक्षाः विचक्षणाश्चसमुदिताः सामाजिकाः तथाहि 'अवधारितनाट्यदेशिमार्गैरसमीचीनपराङ्मुखैरमीभिः। भरतागमदैवतैरवैषा परिषत्सम्प्रति भासते महद्भिः' इति 'उपवेदमुदारधीः स्वनाम्ना भरतः सूचितभावरागतालम्। यमुदाहरति स्म विश्वभोग्यं तदभिज्ञैरबहिष्कृता वयंस्मः।' इति च निबद्धभावरागतालं दिव्यप्रबन्धदिव्यभावनामभिनयनृत्तादिभिः द्रष्टृश्रोतृमनसामावर्जकाः अरयरकुलीनाश्रीरंगनाथदासाः तदभिनयनृत्तादिभूयः प्रेक्षणेन भावरागतालेषु अभिनयनृत्तभावुकतायां च नैपुण्यं सम्पादितवन्तश्च वर्णिताः॥

अत्रचतुश्लोकीश्लोके प्रयुक्तेतिपदद्वयमपिहेत्वर्थकम्। 'प्रपन्न' इतिचेत्यत्र प्रपन्नशब्दः 'किन्तुप्रपत्तिबलतारितविष्णुमायमद्वंश्यराजकुलदुर्ललितं किलैवं श्रीरंगराजकमलापदलालितत्वं यद्वापराध्यति ममस्तुतिसाहसे स्मिन्' इति श्लोक इव 'श्रीरंगेशपुरोहितः' इति स्ववंश्यानां श्रीरंगराजकुलदासत्वेनाभ्युच्चयहेतुतया प्रपत्तिबलतारितविश्वमायत्वमभिदधातीव। 'तस्माद्ध्यं प्रपन्नं न प्रतिप्रयच्छ-

न्ति' 'सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतत् व्रतं मम' इत्यादिश्रुतिस्मृतीनां प्रपन्नस्य सर्वेभ्योऽभयसिद्धि निश्चयं प्रतिज्ञातॄणां प्रमाणानां स्मरणमिष्यते। 'सर्वेभ्योभूतेभ्य' इत्यत्र 'एकोविष्णुर्महद्भूतं' इति प्रसिद्धमहाभूतात् स्वस्मादपि अभयं ददात्येव। 'भीषास्माद्वातः पवते' इतिप्रसिद्धभयहेतोरभीतिध्रुवं प्रपन्नैः कांक्षेत। संसाररूपमहाभयहेतुस्तन्निवर्तकश्च भगवानेव। भयकृदेव भयनाशनः। इतरेषांस्ववध्यस्य न त्राणसामर्थ्यम्। स्वस्य तु इतरैर्वध्यत्वेन संकल्पितस्य त्राणे निरतिशयं सामर्थ्यमस्ति। पारमार्थिकी अमोघा शरणागतिस्त्राणसामर्थ्ययुक्तकारुणिक एव फलकरी स्यात्। 'ब्रह्मा स्वयंभूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा। इन्द्रो महेन्द्रस्सुरनायको वा त्रातुं न शक्तायुधि रामवध्यम्।' इति रावणसभायां, सीतापहारिरावणस्य वधः रामेण संकल्पितश्चेत् तद्वध्यस्यरावणवरदातृपितामहेन, कैलासपर्वतस्यविंशतिभुजबलेन चालने सन्तुष्यानुग्रहंकृतवता प्रत्यहं रावणेन सुदीर्घकालं शिवपूजाक्रमेण पूज्यमानेन रुद्रेण वा, न त्राणे सामर्थ्यस्य संभावना। स्वस्मिन्दासत्वं प्रपन्नत्वमिति संनिकृष्टतमसम्बन्धविशेषसंपादकाकारद्वयमस्तीति स्वकरिष्यमाणस्तोत्रस्य भयलेशंविना स्वकर्तव्यताबुद्धिः सुसंपादा। 'स्तोष्याम्यहं निर्भयः' अहमिति स्वस्य 'अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः' इत्यादिश्लोकेषु अनुसंहितनैच्यानुसन्धानमत्रानुसन्धत्ते स्तोत्रक्रियायामत्यन्तमनधिकृतोपि सन् प्रत्युत तदधिकारनिषेधकदोषबहुत्वविशिष्टोपि इति च व्यज्यते। अहमिति नात्राहंकृतौ तात्पर्यम्।

गर्वाभिमानावलेपाद्यभाव एव तात्पर्यम् । दासत्वप्रपन्नत्वोभयविधसम्बन्धरूपप्रभ्वभिगमनयोग्यतासम्पत्तिवैशिष्ट्यं वाहं शब्देन बुबोधयिष्यते । तद्बलं विना स्वस्य स्तोतृत्वाधिकारे नान्वयप्रसक्तिलेशोपि । निर्भयं स्तोतृत्वेपि तादृशसम्बन्धद्वयविशिष्टत्वमेव हेतुः प्रभुतोपिदत्ताभयस्य प्रपन्नस्य, 'न मे मोघं वचो भवेत्' इति सर्वथाऽमोघस्य प्रपत्तिरक्षणप्रतिज्ञातरक्षणसंकल्पस्यामोघत्वे पूर्णविश्वासात् न भयस्यावकाशः । प्रत्यहं स्तुतिपाठकवन्दित्वरूपदासकमकरत्वाच्च भयमपैति । 'निर्भयं मामलज्जं' इति स्तोत्ररत्न इवात्रपठितस्य निर्भयशब्दस्य निर्लज्जत्वस्याप्युपलक्षकत्वंग्राह्यम् । निर्भयोविलज्जश्चेत्यर्थसम्पत्तिः । तथाच 'गायन् विलज्जोविचरेदसङ्गः' इति श्रीभागवतविहितमपि अनुष्ठितं भवति ॥

'लोकैकेश्वरि' लोकभयाभयविधायिनो मरुत्तरणि पावकादयः महद्भयं वज्रमुद्यतमिव भगवदाज्ञातोभीतभीताः, 'भीषास्माद्वातः पवते, भीषोदेतिसूर्यः, भीषास्मादग्निश्चेन्द्रश्च, मृत्युर्धावतिपञ्चम इति' इति कम्पन सूत्रविषयवाक्योक्तरीत्या एजन्ते इति प्रसिद्धम् । ईश्वर्या अपि लक्ष्म्याः, सर्वभयहेतुभूतेश्वरात्कथं स्वदासेभ्यः प्रपन्नेभ्यश्च निर्भयत्वप्रदत्वसिद्धिरितिचेदुच्यते 'लोकैकेश्वरि' इति । अत्र सम्बोधने एकशब्दः मुख्यार्थकः 'पुंप्रधानेश्वरेश्वरी' त्यत्र ईश्वरस्यापीश्वरीत्वं स्पष्टं निगदितम् । 'अपाङ्गा भूयांसो यदुपरिपरं ब्रह्म तदभूत् अमी यत्र द्वित्राः स च शतमखादिस्तदधरात् ।' इति श्रीगुणरत्नकोशश्लोकः इह भाव्यः । यं कामये तं तं उग्रं करोमि, तं ब्रह्माणं इत्यादिमन्त्रोपीह भाव्यः । 'शिवः शक्त्यायुक्तो भवति

च कदाचित् प्रभवितुं, न चेदेवं देवः प्रभवति किल स्पन्दितुमपि' इति सौन्दर्यलहर्युपक्रमश्लोकः उदाहृतः श्रीरङ्गरामानुजमुनिभिः स्वकृतन्यायसिद्धाञ्जनव्याख्यायां, आचार्यहृत्स्थत्वेन लक्ष्म्याः शक्तित्वेन निर्देशकप्रमाणहृदयावबोधनप्रकरणे ईश्वरपरिच्छेदान्ते। 'अप्रमेयं हि तत्तेजः' इत्यादिवाल्मीक्युपबृंहणश्लोकेषु ईश्वरतेजोरूपपराभिभवनरूप सामर्थ्यस्याप्रमेयता भूतकाष्ठागतदशा लक्ष्मीपतित्वैकाधीनेतिविशदमुक्तम्। तेन चैतद्विषये श्रुतीनां हृदयं स्पष्टीकृतम् तदन्तर्भावादिन्यायादपि ईश्वरं प्रत्यपीश्वरीत्व स्पष्टबोधकेश्वरेश्वरीत्वनिगदस्य प्रामाण्याधिक्यं सुवचम्। 'त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं किं तैरन्तः कलहमलिनैः किञ्चिदुत्तीर्यमग्नैः। त्वत्संप्रीत्यै विहरति हरौ संमु(न्मु)खीनां श्रुतीनां भावारूढौ भगवति युवां दैवतं दम्पती नः।' इति परदेवताद्वन्द्वभूतसर्वशरण्यदिव्यदम्पत्योर्मिथस्स्पर्धाप्रसङ्गस्य वा न्यूनताधिक्यसंभावनाया वाऽशक्यशङ्कत्वात्, तदुल्लेखोद्यमस्य विरसविरसत्वाच्च वैषम्यगन्धरहितं निष्प्रत्यूहप्रणयघटितं नित्यानपायं साम्यं, स्नेहमयीत्वं, ईश्वरत्वस्य तयोर्व्यासज्यवृत्तित्वं चाश्रयितुं योग्यम्। 'न्यूनाधिकत्वसमताविषयैर्विवादैः' इति गोदास्तुतौ न्यूनाधिकत्वयोः पूर्वपक्षत्वं, समतारूपसिद्धान्तपक्षे विश्रमश्चसमतायाः सर्वोत्तरत्वेन चरमनिर्देशेन व्यञ्जितम्। श्रीमद्रामानुजसिद्धान्ते ईश्वरत्वस्य दम्पत्योर्व्यासज्यवृत्तित्वं वार्तामालाख्यद्रामिडग्रन्थे बह्वीषु पूर्वाचार्यवार्तासु स्पष्टं वर्णितम्। लक्ष्म्याः ऐश्वर्यस्यानन्तत्वं स्वाभाविकत्वं च स्पष्टं निगदितं पृथुगद्ये। तस्मात्प्रथमोक्ते ईश्वरस्यापीश्वरीत्वपक्षे

नैर्भर्यं विहाय लोकनाथदयितात्वात् तस्याः स्वप्रजानां अभय-सम्पत्तिसाधनेच्छायाः नायकं प्रति तद्विषयकस्ववचनस्य च कदाचिदपि भञ्जनं न क्रियेत स्वात्यन्तवल्लभेनेश्वरेणेतीदं, 'लोक-नाथदयितेति' अव्यवहितानन्तरमेव सम्बोधनेन व्यज्यते । प्राची-नायां मुकुन्दमालायां 'श्रीवल्लभेत्युपक्रमपठितमत्र भाव्यम् । श्रीवल्लभत्वात् मोक्षरूपसर्वोत्तम श्रेयोभूतवरदाता भवति । वरद-राजस्तवे श्रीमद्दीक्षितैः उपक्रममङ्गलश्लोके स्तोत्रप्रतिपाद्यवरदस्य मोक्षप्रदातृत्वं वरदसंज्ञयैवलब्धमिति, 'श्रेयस्स मेदिशतु शाश्वतिकं मुकुन्दः' इति चरमपादपठनेन व्यञ्जितम् ॥

'दान्ते दयां ते विदन्'

दासकुलपारम्पर्येण श्रीरङ्गनाथश्रीरङ्गनायकीभूतराजकुलदास्ये संवर्धितत्वात्, प्रत्यहं तद्वन्दितत्वेन तन्नन्तृत्वरूपशेषत्वस्याभ्यस्त-त्वात्, 'दान्तो यं वृषभयुत्राहलशकटादिवहनयोग्यः कृतः' इति, 'शान्तो दान्त' इति श्रुतौ दान्तशब्दस्यार्थं वर्णकभामत्यनुसारेण नन्तृत्वरूपदान्तत्वं शेषत्वस्वरूपानुरूपस्तुतिकर्मप्रह्वत्वं कथञ्चिदस्ति । दान्ते मयि अदान्तत्वाभाववति ते सहजां दयां जानन् अहं निर्भयस्तोष्यामि । अदान्तत्वाभावः दान्तत्वरूपभावान्तरम् । अदान्तश्चेद्दयांनैवापेक्षेत । नापितां लभेत । नात्रदान्तिरूपभाव-गुणपौष्कल्यं विवक्षितम् । किन्तु 'भावान्तरमभावोऽन्योनान्यो-तोऽस्त्यनिरूपणात्' इत्युक्तरीत्या अदान्तत्वाभावद्योतनेन यत्कि-ञ्चिद्दान्तत्वरूपभावान्तरमात्रमत्राभिप्रेतमिव । दास्यं प्रपन्नत्वं चोभयमप्यस्मिन् स्तोतर्यस्ति । दासकुलजस्य स्तुतिरूपदासकर्म-

करस्थ दान्तत्वमौत्सर्गिकमेव । 'शरणमित्यपि वाचमुदैरिरम' इति, 'भव शरणं' इति च वागुत्सृष्टा स्यादनेन। यद्यप्यहं त्वत्स्तुत्यपेक्षित ज्ञानशक्त्यादिशून्यः, अहं एतन्मात्रं जानामि, कथञ्चिद्वान्ते मयित्वद्दयानियतेति । स्तोष्यामीत्यत्र द्वितीयश्लोकोत्तरार्द्धोक्त्या इतः परमेव मुख्यं स्तोत्रं प्रारप्स्यत इत्युच्यते ॥

ईषत्त्वत्करुणानिरीक्षणसुधासन्धुक्षणात् रक्ष्यते
नष्टं प्राक्तदलाभतस्त्रिभुवनं सम्प्रत्यनन्तोदयम् ।
श्रेयो न ह्यरविन्दलोचनमनः कान्ताप्रसादादृते
संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित् ॥

'तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः। सन्दर्शयन्निरमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय ।' इतिस्तोत्ररत्ने पुराणरत्नस्य पराशरप्रणीतस्य चिदचिदीश्वरतत्त्वविषये तत्तत्स्वभावविषये पुरुषैरर्थ्यमानभोगापवर्गतदुपायगतिविषये च तत्त्वैकान्ततः स्पष्टस्पष्टतया सन्दर्शकत्वं दृढमवधारितम् । श्रीतत्त्वरूपेश्वरतत्त्वविषयेपि तदेवानःसंशयं निष्कृष्टं प्रमाणमादृत्य साक्षात्स्तुतिभूतैतच्छ्लोकयुत्तरार्द्धरूपश्लोकद्वये ईश्वरमिथुनस्य साहित्येन ईश्वरतत्त्वघटकत्वं, पुंद्वन्द्वभूताग्नावैष्णवाग्नीषोमीयादिदेवताद्वन्द्वेषु च यजमानप्रदीयमानहविरुद्देश्यत्वस्य व्यासज्यवृत्त्या द्वन्द्वनिष्ठत्वमिति वैदिकन्यायानुसारेणात्महविस्समर्पणरूपात्मयागेप्यात्महविस्समर्पणोद्देश्यत्वमीश्वरदम्पत्योरविभक्तमेकमिति देवतापारमार्थ्यवित्पराशरहृदयं प्रकाशयति । एतच्छ्लोकपूर्वार्द्धे श्रीविष्णुपुराणवर्णितामृतमथनवृत्तान्तप्रकरणम

तिसंक्षेपेण संगृह्यते श्रेयः सामान्यप्राप्तिविषये अन्वयव्यतिरेकाभ्यां लक्ष्म्याः प्रसादस्य कारणत्वनैयत्यं सिद्ध्यतीति पराशरनिष्कर्ष-सन्दर्शनप्रदर्शनाय ॥

'फलमत उपपत्तेः' इति साधनाध्यायद्वितीयपादोपसंहारे मोक्षान्तसर्वफलहेतुभूतेश्वरतत्त्वस्य पूर्वापराधिकरणनिष्कृष्टोपनिषत्क-सिद्धशारीरकशास्त्रप्रतिपाद्यपरब्रह्मत्वमभिप्रेत्य अतश्शब्देन तदेव परामृष्टम् तच्च परब्रह्मजिज्ञासासूत्रोद्दिष्टं जन्मादिसूत्रलक्षितं श्रियःपतिरूपपुरुषोत्तमाभिधानमिति भाषितम् जिज्ञासासूत्रे । जन्माद्यधिकरणसारावल्यां च, 'श्रीमति ब्रह्मतोक्तेः' इति, 'पुंसूक्तादिप्रसिद्धो गुणनिधिरघजिद्ब्रह्मशब्दार्थ उक्तः' इति च तत्प्रसाधितम् । भगवता पराशरेण श्रियः पतेरेव ब्रह्मणः सर्वफलहेतुत्वं प्रतिज्ञातमुपपादितं चामृतमथनप्रकरणे । 'त्वया देवि परित्यक्तं सकलं भुवनत्रयम् । विनष्टप्रायमभवत् त्वयेदानीं समेधितम् ।' इति इन्द्रस्तोत्रश्लोकपठितशब्दसौसादृश्यमस्य श्लोकस्य रस्यम् । तत्र यथा दृढावन्वयव्यतिरेकौ, तथैवेहापि पूर्वोत्तरार्द्धयोः । तत्र दुर्वासश्शपनप्रकरणे, अक्षान्तिसारसर्वस्य प्रकृतिकोपनस्य दुर्वाससः कोपर्जनः, तत्प्रयुक्तत्रैलोक्यनिःश्रीकभवनरूपशापवाग्विसर्गश्च वर्णितौ । शापनिमित्तं च, 'श्रियो धामस्रजं यस्त्वं मद्दत्तां नाभिनन्दसि' 'मया दत्तामिमां मालां यस्मान्न बहुमन्यसे । त्रैलोक्यश्रीरतो मूढ विनाशमुपयास्यति ।' इति दुर्वाससा स्वदत्तस्य इन्द्रशिरोधार्यदेवीपुष्पमालोपहारस्यावमाननेति द्विरभ्यस्तम् । देव्यास्तद्विषयेक्रोधः कुत्रापिनवर्णितः केनापि । अतएव 'तदलाभतः प्राक्नष्ट'

मिति कटाक्षलेशस्यापि पूर्ववृत्तस्याननुवृत्तिरूपालाभ एव पूर्ववृत्त सलक्ष्मीकत्वस्यादर्शनमात्रं दुर्वासश्शापवशादापतितमिति व्यज्यते। ईषत्त्वत्करुणानिरीक्षणसुधासन्धुक्षणात् सम्प्रत्यनन्तोदयं त्रिभुवनं दृश्यते। इदं च करुणानिरीक्षणं, तेन संधुक्षणं चापराधकृद्-गजेन्द्रेन्द्रादिनिर्वर्तिताभिषेकाद्यव्यवहितानन्तरवृत्तमिति सम्प्रतीत्यनैन बोध्यते। अत्र हेतुश्च नापाङ्गानां भूयस्त्वं, किन्तु देव्याः ईषत्कटाक्षलवएव। 'अमी यत्र द्वित्राः स च शतमखादिस्तदधरात्' इति श्रीगुणरत्नकोशोक्तप्रकारेण सम्पूर्णैकद्वित्र्यादिकटाक्षपतनानां इदम्प्रथमतया इन्द्रायइन्द्रपदवीदानफलकमेव भवेत्। ईषदिति सम्पत्पुनरुदयकारणे कटाक्षे विशेषणदानं, तत्कार्यभूतस्य भुवनत्रयानन्तश्र्यभ्युदयलाभस्य वर्णने अनन्तपदविशेषणदानं च विवक्षितं कैमुत्यं पुष्कलीकुरुतः देवीकटाक्षनिरीक्षणस्यास्मिन् सुधानिमित्तं महत्संरंभघटितामृतमथनतदुत्पत्तिप्रकरणे सुधात्वेन रूपणमतीव रस्यम्। सर्वसुरासुरसमुदायैरतिक्लेशेन भगवन्निर्वर्तितबहुविधोपकारसाचिव्येन सम्पादितां प्राकृतां, मोक्षामृतस्य कदाप्यलंभिकां, अमुख्यतयैवामृतनामभजमानां सुधां सुबहुमेनिरे इन्द्रादयः। अमृतस्वरूपं भगवन्तं पश्यन्त एव न तममृतत्वेन भावयामासुः। स्वेभ्यः प्राकृतसुधालंभनार्थातिक्लेशव्यापारेष्वेव तत्सहकारं विनियोजयामासुः। सुधया सह देवी च समुत्तस्थौ। तस्याः अभिषेकानन्तरं संसृत्यध्वानतीतामृतत्वरूपमोक्षादत्यन्तावरफलोद्देश्यकं, 'आर्तोऽर्थार्थी' इति गीताश्लोकनिर्दिष्टाधिकारद्वयमात्रं देवीभजने एषां सुरसुरेन्द्राणां निमित्तमभूत्। नैते मुमुक्षवः, बुभुक्षव एवैते।

बुभुक्षु चाति बुभुक्षवः। इदं व्यज्यते एषां अध्वनः संसृत्यध्वत्वेनोत्तरार्द्धे वर्णनेन। 'सम्प्रति दृश्यते नष्टं प्राक्' इत्युक्तया प्राक्नष्टमित्यस्य प्राक्अदर्शनं गतं, नात्यन्ताभावं गतमित्यर्थो धात्वर्थानुसारेण जिघृक्षितः। तच्च 'सम्प्रति दृश्यते' इत्यनेन स्पष्टीक्रियते। अनुपदमेव 'अनन्तोदय' मित्यत्रोदयशब्देन पूर्वमस्तमि तत्वमात्रमेव, तच्च पुनरुदयावधिकमिति द्योत्यते। उत्तरार्द्धे व्यतिरेकः दृढं प्रतिज्ञायते। श्रीसकाशाद्विना कथं यस्य कस्यापि श्रेयो लाभस्संभाव्येतेति द्योत्यते श्रेयो न हीति प्रथमपठनेन 'संभाव्यते न कर्हिचित' इति श्लोकोपसंहारे दृढनिषेधवाक्यशेषस्य निवेशनेन च। हिः हेतौ प्रसिद्धौ च। 'अरविन्दलोचनमनः कान्ताप्रसादात्' इत्यत्र द्वन्द्वसमासग्रहणं स्वरसमिव। 'द्वन्द्वस्सामासिकस्य च' इति भगवतैव प्रशस्तः द्वन्द्वसमासः। सर्वसमस्य साम्यरसिकस्य भगवतः उभयपद समत्वपरिपालकद्वन्द्वसमासे रुचिः। न कस्यापि पदस्यापकर्षो भवति तस्मिन्समासे। 'द्वन्द्वः समासोस्मि, सामासिकस्य समाससमूहस्य' इति श्रीशांकरभाष्यम्। 'सामासिकः समाससमूहः तस्य मध्ये द्वन्द्वसमासोऽहं, सह्युभयपदार्थप्रधानत्वेनोत्कृष्टः' इति श्रीगीताभाष्यम्। 'पूर्वोत्तरान्यपदार्थप्रधानेभ्योऽव्ययीभावतत्पुरुषबहुव्रीहिभ्यो द्वन्द्वस्योत्कर्षमाह सह्युभयेति' इति तत्र तात्पर्यचन्द्रिका। द्वन्द्वसमासग्रहणे, 'पण्डनाकालेनिर्तिरुवरुकुं पङ्कयत्तालूतिरुवरुकुंकोण्डु' इति श्रीशठकोपमुनिजन्मक्षेत्राधिपतिविषयद्रमिडगाथागीतरीत्यनुसरणंभवेत्। पुरुषकारमात्रस्यसाक्षान्मोक्षहेतुत्वाभावेन तस्य कदाप्यव्यभिचरितसुनिश्चितात्यन्तामोघहेतुत्वस्य

वास्तवत्वात् तस्यैव मोक्षप्रदभगवत्कटाक्षैकसन्धुक्षकत्वाच्च षष्ठी-तत्पुरुषमाश्रित्य भगवन्मनः कान्ताभूतश्रीमात्रस्य मोक्षणसङ्कल्प-रूपप्रसादसिध्यर्थं नियमेनापेक्षितपुरुषकारत्वरूपप्रसादमात्रपरत्वं वा ग्राह्यम्। फलान्तरप्रदानेषु श्रीकर्तृकपुरुषकारस्यापेक्षानियमो नास्तीति दृश्यते क्वचित् क्वचित्। तथा चेत् तादृशस्थलेषु संसारा-ध्वाक्षराध्वसम्बन्धिषु दम्पत्योरुभयोरपि प्रसदनसाहित्यस्य फला-धिकरणसिद्धान्तप्रतिज्ञानुसारेणावश्यवक्तव्यादत्र द्वन्द्वसमासा-श्रयणं दुर्वारम्। 'तदन्तर्भावात्त्वां न पृथगभिधत्ते श्रुतिरपि' इति श्रीपराशरभट्टार्यप्रदर्शितन्यायस्य स्पष्टं कर्तृत्वेन निगदिते भगवति जगन्निर्वाहकार्येषु सहकर्तृत्वेन देव्या अप्यन्तर्भावप्रापकत्वमभि-प्रेतं स्यात्। आत्मानं प्रत्यपि शेषिणः पत्युरप्यन्तर्भावः श्रीमात्रस्य-कर्तृत्वेन निगदने प्राप्तिर्भवेद्वानवेति चिन्तने भगवतः श्रीमात्र-निगदने अन्तर्भावनैयत्यं नवक्तुं सुशकम्। तस्मादत्र श्रीकर्तृक-पुरुषकारनियमापेक्षारहितेषु मोक्षादवरसं साराक्षराध्ववर्तिफला-न्तरदानेषु उभयोः प्रसन्नत्वस्य द्वन्द्वसमासेन सुप्रापत्वे तत्समासा-श्रयणमेव स्वरसम्। सर्वथात्रद्वन्द्वसमासाश्रयणस्यापि अवलम्ब-नीयताऽस्ति। 'चतुर्विधा भजन्ते मां' इति अधिकारिचातुर्विध्ये निर्दिष्टेपि आर्तस्यार्तिः पूर्वप्राप्तैश्वर्यनाशप्रयुक्तत्वमाश्रित्य नष्टै-श्वर्याधिकारिपरत्वं वर्णयित्वा, तस्यैव प्राङ्नष्टार्थस्य पुनरर्थित्व-रूपार्थार्थ्यधिकारित्वेन व्याख्या भाषिता। तथा च आर्तोऽर्थार्थी-त्युभयोरेकाधिकारित्वं प्रदर्शितम्। तादृशमधिकारित्रैविध्यमेत च्छ्लोकोदिताधिकारित्रैविध्येनानुगृह्यते। तिरुप्पल्लाण्डुद्रमिड-

गाथाप्रबन्धेपि ईदृशमधिकारित्रैविध्यं प्रदर्शितम् । श्रीशठकोपमुनिगाथासु च इदमुपलभामहे ॥

शान्तानन्तमहाविभूतिपरमं यद्ब्रह्मरूपं हरेः
मूर्तं ब्रह्म ततोपि तत्प्रियतरं रूपं यदत्यद्भुतम् ।
यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि
तान्याहुस्स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ॥

पूर्वश्लोके श्रियः अरविन्दलोचनस्य भगवतोमनः कान्तात्वमुक्तम् स्वात्यन्तवाल्लभ्येन स्वकृतपुरुषकारस्य नैयत्येनानुल्लंघनीयत्वोपपादकम् । मोक्षणसङ्कल्पनिष्पादनविषये मातुः श्रियः पुरुषकारनिर्वर्तनम् । मोक्षणसङ्कल्पस्येश्वरतत्त्वनिष्ठत्वात्, मुमुक्षुप्पडिव्याख्यानादिग्रन्थेषु बहुशः उभाभ्यामपि दम्पतीभ्यां सहघटितमीश्वरतत्त्वमिति नेश्वरमात्रस्य पत्न्याः स्वबुद्ध्या पृथक्कृतस्येश्वरतत्त्वपूर्तिरिति च निर्धारितमनुसृत्य मोक्षणसङ्कल्पस्योभयकर्तृकत्वं श्रीवैष्णवसर्वाचार्यसम्मतत्वेनसम्मन्तुं न दुःशकम् । उभयोर्मोक्षण संकल्पकर्तृकत्वेन वर्णने 'छायेवानुगता भव' इति ज्ञान्यग्रेसरजानकीपितृवैदेहमुखेन महर्षिगीतानुसारेणयद्यत्पत्यासंकल्प्यते तत्तत् छायाभूतया वा छायावत् तत्कृतसर्वानुकारिण्या वा श्रिया मोक्षणविषयसंकल्पकरणेपि अनुगम्येत । सर्वथा भर्तृकृतसंकल्पस्य तत्क्षण एव पत्नीमनस्यपि प्रतिच्छायात्वेन उदयो भवेदिति आश्रयणं सुलभं स्वरसं च । निरतिशयवेगात्प्रतिफलनक्रियायाः मूलभूतबिम्बक्रियातः यौगपद्यभेदकरूपकालभेदोपि नात्यन्तं परिगणनयोग्यः । 'अन्वासतेपत्निमतोयथार्हं च्छायास्सजीवा इव

धर्मदाराः' इति सजीवच्छायात्वेन निरूपिताः धर्मपत्न्यः संकल्पसूर्योदये अगस्त्याश्रमवर्णने । सूर्यस्य पत्नी च्छायादेवीति प्रसिद्धम्। सूर्ये वा चन्द्रे वा प्रकाशमाने तदालोके दृश्यमानायाः पुरुषच्छायायाः पुरुषदेहचलनादिप्रयुक्ततत्तुल्यचलनादिक्रियावत्वं भवतीति प्रसिद्धम् । श्रीमन्मध्वमते केशवप्रतिबिम्बत्वेनोक्तानां जीवानां क्रियास्सर्वाः बिम्बभूतेश्वरकर्तृकक्रियाणां प्रतिफलनभूता इत्युच्यते। 'अनुकृतेस्तस्य चे' तिसूत्रे, 'स्थितः स्थितामुच्चलितः प्रयातां' इति रघुवंश श्लोक इव, 'यथा धेनुर्वत्सं च्छाया वा सत्त्वं अनुगच्छति' इति भगवद्गुणदर्पणे भट्टार्यैरुदाहृतश्रुत्यनुसारेण बिम्बकृत्यनुसारित्वं च्छायाभूतपत्न्यास्सुग्रहम् । दम्पत्योस्सहत्वं सर्ववैदिकक्रियासु प्रसिद्धम् । वेदान्तानां प्रयोजनकाष्ठाभूतसंसारिजीवमोक्षणक्रियायां सर्वमातापितृभूतयोर्दम्पत्योस्साहित्येन कर्तृत्वान्वयः स्वरस इत्यपि सुग्रहम्। 'उभयाधिष्ठानमेकंशेषित्व' मिति सर्वपूर्वाचार्यसम्प्रतिपत्तिः। 'उद्देश्यत्वं जननि भजतोरुज्झितोपाधिगन्धं प्रत्यग्रूपेहविषियुवयोरेकशेषित्वयोगात् ।पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणो नावच्छेदं भजतिमहिमा नर्तयन्मानसं नः।' इति श्रीस्तुतिश्लोके, प्रत्यग्रूपात्महविस्समर्पणे सम्प्रदानत्वेनोद्देश्यत्वं दम्पत्योस्सहैव । तच्चोद्देश्यत्वमुपाधिलेशरहितमत्यन्तं मुख्यमित्युभयोर्महिमामनसस्सानन्दनर्तनेन वर्णितः दम्पत्योरुभयोरपि ऐश्वर्यादिसर्वमहिम्नां स्वाभाविकत्वरूपस्वतस्सिद्धत्वं श्रियोपि भगवद्विषये इव पुनः पुनरभ्यासेन पृथुगद्ये निगद्यते। पुरुषकारनिर्वर्तनार्थं मातरं श्रियं प्रपद्य, 'प्रपत्तिस्सफला भवतु' इति मातुरा-

शिषं लब्ध्वा, प्रपत्तिरूपप्रार्थनाक्षणे मातापितृरूपेश्वरतत्त्वघटक-दिव्यदम्पत्योर्मध्ये ज्ञानसामान्यस्य, 'श्रियः पतिसंज्ञकस्य श्रिया नित्यविशिष्टस्य भगवतः श्रीवैशिष्ट्यविशिष्टत्वेनैव भाव्य' मिति, 'श्रीशठकोपमुनेः' 'तामरयाक्केक्वनोस्वनैये नोक्कुमुणर्वु' इति गाथया, 'ज्ञानं चेत् श्रियः पतिं विहाय नैव प्रतिष्ठां भजेतेति' यतिपतेर्वार्तया च ज्ञानविशेषरूपप्रपदने परंतां श्रियं प्रयत्नपूर्वकं व्यावर्त्य अत्यन्तं निश्शेषतो विहाय श्रीमच्छब्दरूपोपक्रमश्रुतिं ऐदम्पर्येण निर्निमित्तं तिरस्कृत्य भगवन्मात्रस्य गोप्तृत्वेन वरणीयत्वं शरण्यत्वेनोद्देश्यत्वं च भजनीय मिति निर्बन्धनं स्वरसं स्याद्वेति सर्वैरालोचनीयम् । उभयोरपि बुद्धौ संनिधापननैयत्यस्य निरपवादमौत्सर्गिकत्वात् प्रपदनक्षणेपिरक्षकत्वेन प्राप्तायाः श्रियः प्रयत्नतो व्यावर्तनमेव करणीयं भवेत् तामुद्देश्यत्वात् बहिर्भावनाय । दयादिविशेषणान्तराणामिवास्याः श्रियोपि अविशेषेण वैशिष्ट्ये लक्ष्म्याः चेतनत्वरूपविशेषात् न निरपेक्षोपायत्वनियमभंगः शक्यशङ्कः स्वरसतः भर्तृच्छायाभूतायाः तस्याः उपायप्रार्थनोद्देशे वैशिष्ट्येनेश्वरस्वातन्त्र्यस्य न कापिहानिस्संभावयितुं शक्या। यथा दयादिगुणाः ईश्वरानन्याः तथा श्रीरपि तदनन्या । गायत्रीमन्त्रो 'सवितुर्देवस्यभर्गः' इत्यत्रभर्गश्शब्दस्य भगवत्कारुण्यप्रभारूपदेवीपरत्वं स्वरसस्वरसं वर्णितं, 'जयत्याश्रितसन्त्रासध्वान्तविध्वंसनोदयः । प्रभावान् सीतयादेव्या परमव्योमभास्करः' इति श्लोके । इत्थं च वैष्णवाध्वत्वेनात्र पूर्वश्लोकनिर्दिष्टकठवल्लीवर्णिताध्वपारभूतविष्णुपरमपदप्रापणाय प्रथमं पुरुषकारत्वेन श्रियः प्राप-

णाय तत्पुरुषसमासमाश्रित्य, अनन्तरं शब्दावृत्तिं कृत्वा साक्षात्प्र-
पत्त्युद्देश्यत्वे, 'अनन्याधीनकल्याणमन्यमङ्गलकारणं । जगन्निदान-
मद्वन्द्वं द्वन्द्वं वन्दामहे महः ।' इति प्रसिद्धसर्वमङ्गलभूतद्वन्द्व-
घटकावुभावप्येकीकृत्य तत्संग्रहणद्वन्द्वसमासाश्रयणेन कार्यमित्य-
र्थवर्णनं नास्वरसम् । श्रीमद्भट्टार्यप्रोक्तश्रीविषयकतदन्तर्भावन्यायस्य
प्रपत्त्युद्देश व्यापारेऽपवादकं किमपिवचनं न पश्यामः । नित्ययुक्त-
त्वेन प्रसिद्धां मतुप्रूपश्रुतिरूपवचनेन सुस्पष्टं वैशिष्ट्याभिधान-
वतीं श्रियं प्रपत्तिरूपास्मद्ज्ञानविशेषे परं यत्नतो बहिष्कृत्य केवल-
भगवन्मात्रोद्देशः कर्तव्य इति निर्बन्धनगतिर्न तथा स्वारसिकाव ।
करणमन्त्रे उपायबोधकपूर्वखण्डे समासेन प्रयोगः कृतः, फलभाव-
कोत्तरखण्डे व्यस्तरूपेण च प्रयोगः कृत इति स्वारस्यं च न
विस्मरणीयम् । इत्थं द्वन्द्वसमासं जगन्निदानद्वन्द्वविषये समास-
सामान्ये द्वन्द्वसमासस्याभ्यर्हितत्वं निर्धारितवतो भगवतोरुचिमनु-
सृत्य प्रयुज्य, अनन्तरश्लोके फलविषये, 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः
परमा मता' इति याज्ञ्यवलक्यस्मृत्युक्तरीत्या परमां विशुद्धिं प्राप्तानां
नित्यमुक्तानामेतद्द्वन्द्वप्रजाभूतानां स्वाविभागेन नित्यपरिष्वञ्जन-
व्यापारे काष्ठागतरागेण निरतिशयवात्सल्येनाऽऽनन्दघनस्यस्वरूपा-
भ्यां ततोपि तत्प्रियतरस्वमूलविग्रहाभ्यां स्वेच्छागृहीतेतरतदुपादा-
नकसर्वेतरविग्रहाभ्यां च साहित्येन निरन्तरं सम्पूर्णं व्यापृतत्व-
मत्रवर्ण्यते । प्रथमश्लोके पुरुषोत्तमस्य नारीणामुत्तमायावध्वाश्च
फणिपतिरूपपर्यङ्कस्य साधारणत्वं फणितम् मुक्तिरूपसर्वविशुद्ध-
प्रजापरिष्वञ्जनेपि फणिपतिरूपपर्यङ्कारूढत्वस्य साधारणत्वं सर्व-

नित्यमुक्तानामस्तीति ईश्वरमिथुनस्य दयाकाष्ठावर्ण्यतेऽत्र तुरीये फलश्लोके ॥

'भोगमात्रसाम्यलिङ्गाच्चे' ति शारीरकशास्त्रान्तिमाधिकरणीय-सूत्रप्रयुक्तमात्रशब्देनाभिप्रेतः कात्स्न्यार्थोऽप्यनेन श्लोकेन विवृतो भवति । अस्मिन् तुरीयश्लोके शारीरकतुरीयाध्यायप्रतिपादितं फलं विव्रयते । 'फलमपि च शारीरकमितः' इत्येतत्स्तुतिभाष्यमङ्गलश्लोके पठितरीत्या दम्पत्योः पित्रोर्नित्यपरिष्वङ्गरूपप्राप्तेरेव फलत्वादुभयो-र्गाढोपगूढानन्दघनदिव्यात्मस्वरूपे, ततोपि तत्प्रियतरौ आद्यनित्य-दिव्यमङ्गलविग्रहौ च, दुग्धराशित्वेनोत्प्रेक्षिताद्यविग्रहयोः परिणाम-भूताः आत्मभूतज्ञानि भक्तेच्छानुसारिस्वात्मेच्छा परिगृहीत भक्त-मधुरतमस्वमधुरतमदिव्यमङ्गल विग्रहाश्चात्र प्राप्यमोक्षफलत्वेन निर्दिश्यन्ते । 'शान्तानन्तमहाविभूति' इति शब्दस्वरूपमात्रेण शान्तनित्यभोगविभूतिसंज्ञकमोक्षलोकोऽपिध्वनिना ज्ञाप्यते । निरन्तरनित्यवात्सल्याविष्टौ मातापितृभूतदम्पती अत्यन्तविशुद्ध-स्वप्रजाभूतनित्यमुक्तानां सततमविच्छेदेन गाढोपगूढपरिष्वङ्ग-लोलौस्तः । सिंहासनभूतशेषपर्यङ्कारोहं तेषां सर्वेषामपि वात्सकरु-णाभ्यां दत्तः । मोक्षणात्पूर्वमविद्यावृतानां संसारिणां मोक्षलोक-प्रवेशकाले स्वपर्यङ्कारोहदानेन तेषामविद्यां निःशेषतो विनिवर्त्य ऐकान्तिकात्यन्तिकीं विशुद्धिं प्रदाय काष्ठागतया आशया गाढं परिष्वजतश्च । संसारदशायामपि प्रत्यहं तदा तदा प्रजानां परि-श्रान्तानां विश्रमायतनमपेक्षमाणानां विश्रमदानाय पापचिन्ता-रुच्यादिहेतु भूतबहिरन्तः करणानि निर्व्यापारतारूपस्वापं प्रापय्य,

तासां, 'अत्र स्तेनो अस्तेनो भवति भ्रूणहा अभ्रूणहा, पुल्कसो अपुल्कसः, आनन्वागतं पुण्येन, अनन्वागतं पापेन' इत्यादि-श्रुतिभिर्वर्णितरीत्या तात्कालिकीं देहसम्बन्धाभिमानराहित्यरूप विशुद्धिं प्रदाय गाढं ताः परिष्वज्य विलक्षणं किञ्चित्सुखमपि प्रदायदुःखानुभवाभावं च करुणयानिर्वर्त्य प्रजाविषये स्वपरि-ष्वङ्गाशां पूरयतः । ईश्वरज्ञानात परमविशुद्धिसम्पादनसमये तत्फलभूतमोक्षप्राप्तौ सत्यां तदा नित्यतया भाविपरिष्वङ्गस्य मातापित्रोः सततं वर्तमानायाः तद्दानतीव्ररुचेश्च द्योतकंसंसार-कालेपि स्वापदशायां स्वस्वेतर सर्वविस्मारकहार्ददम्पतिपरिष्वङ्ग-दानम् । हार्दरूपावतारे हृदयगुहायां स्वरूपेण दिव्यमङ्गलविग्रहेण-चावस्थितत्वं मातापित्रोरुभयोरपि समानम् । तेन च संसारि-चेतनोज्जीवनविषये सिद्धोपायत्वमुभयोरनादेः कालात्समं यावत्फ-लोदयं नित्यानुवर्तमानं चेति लभ्यते । 'अर्भकौकस्त्वात्तद्व्य-पदेशाच्चनेतिचेन्ननिचाय्यत्वादेवं व्योमवच्चे' तिसूत्रेण सर्वसंसारि-हृदयौकसिहार्दावतारस्य करुणयावस्थानस्य दर्शनसमानाकारप्रीति-रूपापन्नभक्तियोगस्य विषयीभवनार्थत्वं, तद्विषयीभवनेन दर्शन-रूपमोक्षफलानुग्रहणार्थत्वं च स्पष्टीकृतम् । तदोकस्सूत्रेण च 'हार्दा-नुगृहीतः' इति स्पष्टपठित्रा इयमनुग्रहेच्छा स्पष्टीकृता । हृदयगुहाया-मवस्थितयोर्मातापित्रोरुभयोरपि भवेदेतदिच्छाप्रयत्नकृत्यादिरूपो-पायत्वम् । अर्भकौकस्सूत्रे अर्भकशब्दपठनं न केवलं हृदयौकसो-ऽल्पत्वरूपपूर्वपक्षहेतुप्रदर्शनार्थम्, किन्तु अर्भकशब्दस्य परमप्रसिद्ध-मुख्यार्थभूतस्वप्रजार्थकत्वमपि विश्वतोमुखाल्पाक्षरसूत्रप्रणेतृरसि-

कसार्वभौमबादरायणहृदयङ्गतं स्यादिति मन्महे । अर्भकौकस्त्वा-
त्कथं विभुना सर्वेश्वरेण संसारिजीवस्याविद्यान्धकारमयात्यल्प-
सुषिरभूतहृदयगुहा अनादिकालात्सततं निवासस्थानत्वेनाद्रियेत,
विभुस्वरूपेण तेन कथं वा तत्रावस्थातुं शक्येतेत्यपि पूर्वपक्षिम-
नोगताक्षेपयोः, अर्भकौकस्त्वादितिपूर्वपक्षप्रयुक्तहेतुपदमेव वैचित्र्य-
रसोत्पादनाय सिद्धान्त्यपि सिद्धान्तहेतुत्वेनाहृत्य, 'दहरकुहरे-
देवस्तिष्ठन् निषद्वरदीर्घिकानिपतितनिजापत्याऽऽदित्सावतीर्णपितृ-
क्रमात्' इति श्लोकोपपादितरीत्यास्वप्रजाभूतसंसारिजीवस्यस्वकर्म-
वशेनतत्रनिपतितत्वात् तत्रयावज्जीवं तेनोषितव्यत्वात्कथञ्चित्त-
दुद्धरणेच्छयासीदमानतद्विरहस्यासह्यतया च तत्र तेन सह यावच्छ-
रीरपातं वसतीतिपरिहारमुत्तरत्वेन निपुणं निबध्नाति। 'निचाय्य-
त्वादेवं' इत्यत्र एवं पदस्य अर्भकौकस्त्वेनेत्यर्थमपि कृत्वा पूर्व-
पक्ष्युक्तार्भकौकस्त्वप्रकारेण तदोकसाभगवतापितृभूतेन निचाय्य-
त्वात् दर्शनीयत्वादिति सिद्धान्तिसमाधानक्रमोपिग्रहीतुं शक्यः।
'व्योमवच्चे' तिसूत्रखण्डस्य संसारिजीवहृदयरूपात्यल्पात्यशुचि
दभ्राकाशभूतौकसः परमव्योमभूतात्यायामवदानन्दाकाशत्रिपाद्वि-
भूतिवदादरणीयत्वाच्चेति नामैकदेशेनामग्रहणमितिन्यायेन व्योम-
वच्चेति पदस्य परमव्योमपरत्वेन व्याख्यानमप्यभिप्रेयत इव ।
व्योमवच्चनिचाय्यत्वात्हृदयरूपार्भकौकसः । 'यो वेदनिहितं गुहायां
परमे व्योमन्' इत्यानन्दवल्लीश्रुत्यनुग्रहः एतद्व्याख्यानस्य वक्तुं
शक्यः । 'औदन्वते महति सद्मनि भासमाने श्लाघ्ये च दिव्य-
सदने तमसः परस्मिन् । अन्तः कलेबरमिदं सुषिरं सुसूक्ष्मं जातं

करीशकथसादरणास्पदं ते' 'इत्याद्येपरीतिपि एतत्सूत्रपूर्वपक्षहेतु-निर्देशकेन, 'अर्भकौकस्त्वात्तद्व्यपदेशाच्चनेति चेत्' इति सूत्र-खण्डेन जिघृक्षयेत । निरतिशयवात्सल्यप्रयुक्तोद्दिधीर्षया प्रजया सहैव वसति अस्मत्कर्मकृततत्कलेवरं ब्रह्मपुरमितिश्रुतिप्रसिद्धरव-पुरत्वेन मन्यते । अस्मत्हृदयं च पुण्डरीकत्वेन मत्वा स्ववेश्मेत्य-भिमन्यते । 'श्रुतिस्मृतीममैवाज्ञे' इति प्रमाणानुसारेण च्छान्दोग्य-दहरश्रुतौ तादृशवर्णनं भगवदभिप्रायरुच्याद्यनुसार्येव स्यात् ॥

'नित्यैवैषाजगन्माता विष्णोः श्रीरनपायिनी । यथा सर्वगतो विष्णुः तथैवेयं द्विजोत्तम ।' इति मैत्रेयं प्रति पराशरस्य निष्क-र्षोक्तिः प्रथमांशाष्टमाध्याये दृश्यते । अनन्तराध्याये च सप्तदश-श्लोकात्मकेन्द्रस्तुतौ, 'त्वं मातासर्वलोकानां देवदेवो हरिः पिता । त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम्' इति पठितम् । उभय-त्रापि सर्वजगन्मातृत्वं तस्याः, सर्वप्रजापरिष्वङ्गफलकं सर्वगतत्वं उभयोरपिमातापित्रोश्चाविशेषेण निरुपाधिकत्वेनाभिधीयते । तत्रापि लक्ष्म्याः व्याप्तिरुपक्रमपठिता । इन्द्रस्तुतौ उभयोरपि चरा चरकृत्स्नव्याप्तत्वस्पष्टकथनं, प्रथमोपात्तपराशरनिष्कर्षावेदकश्लोके 'यथासर्वगतोविष्णु' रिति दृष्टान्तवाक्योपात्तसर्वगतत्वगुणस्य स्वाभाविकत्वं मातुरपि समानमितिस्वरसतः प्रापयतीव । श्रीमद्वि-ष्णुचित्तचरणैः पुराणरत्नव्याख्याने 'यथासर्वगतोविष्णु' रिति-श्लोकस्य 'यथेति सर्वगतोविष्णुर्यथा–यत्स्वभावः, इयमपि तथा तत्स्वभावा इति विष्णोः सर्वगतत्वसत्यज्ञानादिस्वरूपकल्याण-गुणादीनामतिदेशः' इति प्रथमं व्याख्यानं कृतम । तेन च सर्व-

गतत्वरूपविष्णुगुणस्य तत्स्वाभाविकत्वस्य च मातर्यतिदेशः कृत इति पराशरतात्पर्यं विवृतमाचार्यैरिति गम्यते। तदनन्तरं' अथवा भगवान् विभुत्वेन सर्वगतः, अस्यास्तच्छक्तिवशात् अणुत्वेपि तत्र तत्र संनिधानात् सर्वगतत्वमुक्तं, इयं च सर्वगता' इति योजनान्तरमभिहितम् स्वभावतोऽणुत्वेपि विभुत्वशक्तेरपि श्रियस्सत्त्वात् तया स्वशक्त्या सर्वगतत्वमुपपद्यते इत्यभिप्राय इव तच्छक्तिवशादित्यत्र तत्पदस्य विभुत्वपरामर्शकत्वं सुग्रहम्। तस्याविष्णुपरामर्शकत्वेपि सर्वगतत्वरूपफलस्य नित्यत्वादुभयोः पक्षयोरपिफले न विशेषः । तस्मादेतद्विषयेऽन्तः कलहस्य न किमपिप्रयोजनमावश्यकता वा ॥

पुरुषकारकरणानन्तरं प्रपदनसमये उभयोरप्युद्देश्यत्वं वा, भगवत एकस्यैवोद्देश्यत्वं वा, मोक्षणसङ्कल्पकर्तृत्वमुभयोर्वा एकस्यैव वेत्यत्रविप्रतिपत्तिर्दृश्यते । श्रीमन्नारायणेत्यत्रमतुवा स्पष्टमभिहितं श्रीवैशिष्ट्यं प्रायेण सर्वैरभ्युपगम्यते। श्रियः उपलक्षणत्वपक्षे न निर्बन्धः क्रियते । दम्पत्योर्मिथः शेषशेषिभावस्य सत्वादत्यन्तं समप्राधान्यमुभयोर्न स्वरसतो वक्तुं शक्यम्। 'नित्यानुकूलं स्वतः' इत्येतत्प्रबन्धद्वितीयश्लोके देवीमहिम्नो भगवताप्यपरिच्छेद्यत्वस्यनिरवधिकत्वस्यच स्वतस्सत्वेपितन्महिम्नस्तस्याश्चभगवतो नित्यमनुकूलत्वैकान्त्यस्याभिहितत्वात् भगवदिच्छायास्सर्वदानियमेनानुवर्तिन्याः पत्न्याः प्रजारक्षणदीक्षणे भर्त्रा सह दीक्षितायाः प्रजामोक्षणसङ्कल्पकरणे सहत्वापेक्षया न निरपेक्षत्वभङ्गः शङ्कनीयः। चतुश्श्लोकीभाष्ये आचार्यैः भर्त्रासहवैशिष्ट्येनोद्देश्यत्वं वा समुच्चित्य

द्वन्द्वस्योद्देश्यत्वं वाभवत्विति द्वेधाप्यनुमतिः प्रदर्शिता । 'मोक्षप्रदे भगवति मुमुक्षूणां घटकतयैषतिष्ठतीति च सर्वसंमतम् । परिपूर्णानुभवप्रदानसङ्कल्पस्तु भगवतस्स्वस्यैव वा, सपत्नीकस्यवेति यथाप्रमाणं भवतु । सर्वथा वैष्णवाध्वश्रेयः प्रदत्वमस्याइहोच्यमानं न विरुद्धमिति' इति चतुःश्लोकीभाष्यश्रीसूक्तिरत्रावधेया, अनुभाव्या च । 'पञ्चस्वेतेषुपक्षेषु कश्चिदेकः प्रमाणवान् ।' इत्यप्यस्मिन्विषये कलहोमास्त्विति परमकल्याणबुद्ध्या अन्तः कलहाद्भियाचाचार्यसामरस्यभिप्रायप्रदर्शनं संभावनीयम् । पञ्चसु पक्षेषु व्यस्तयैक्यपक्षोपि अभिहितः । लक्ष्मीतन्त्राग्रन्थादिषु देव्यपि भगवतोऽवतारभूतेतिभूयः कथ्यते । तथा चेत् 'एकमेवाद्वितीय' मिति श्रावितस्यात्यन्तमनुरोधो भवेत् । अद्वितीयश्रुतेः, 'यथाचोलनृपः सम्राडद्वितीयोद्य भूतले । इति तत्तुल्यनृपति निवारणपरं वचः । न तु तद्भृत्यतत्पुत्रकलत्रादिनिषेधकम्' इति अपृथक्सिद्धविशेषणवैशिष्ट्यस्यानिवारकत्वमिति एतच्छतुःश्लोकीकर्त्राऽनुगृहीतम् । एतद्विषये यथारुचि यः कश्चित्पक्षः परिगृह्यताम् । नात्रवयं कमपि निर्बन्धं कर्तुमिच्छामः प्रभवामश्च ॥

श्लोकपदार्थेऽवतरामः । 'शान्तानन्तमहाविभूती' ति । अनन्तमहाविभूतीतिलीलाविभूतिसहज नानाविधविक्रियाव्यापारसंसारदुःखप्रदत्वाद्यैश्वर्यकृत्यान्यन्तं शान्तानि भगवतः स्वरूपे इत्युच्यते । तथा च, शान्ताः अनन्तमहाविभूतयः—नानाविधजगद्व्यापारादिरूपावस्थाविशेषा यस्मिन् तदिति विग्रहः । विभूतिरैश्वर्यं, विविधभवनं च । जगद्व्यापारनिर्वहणे अनन्तावस्थाभेदसंभवोस्ति भग-

वतोपि । लीलाविभूतिसंभावितप्राकृतानन्तक्रियारहितम् । 'त्रिभुवनमिदं शान्तक्षोभं समाधिरनाकुलाप्रसृमरसुधाधाराकारा प्रसीदति शेमुषी' इति भक्तियोगादिसाधने यतमानानां प्रीतिरूपापन्नज्ञानाधिगमारंभे एव भाविमुक्त्यवस्थानुभाव्यात्यन्तशान्तिरसस्याङ्कुरितत्वं वर्ण्यते सङ्कल्पसूर्योदये । शान्तोदितमित्यागमादिप्रसिद्धस्य, 'सञ्चिन्तयन्त्यखिलहेयविपक्षभूतं शान्तोदितं शमवता हृदयेन धन्याः । नित्यं परं वरद सर्वगतं सुसूक्ष्मं निष्पन्द नन्दथुमयंभगवत्स्वरूपम्' इति वरदराजपञ्चाशद्वर्णितस्यनिष्क्रियस्य शान्ति समृद्धस्य निष्पन्दनन्दथुमयस्य भगवत्स्वरूपस्य वा ग्रहणं, 'शान्तानन्त महाविभूतो' ति । 'शान्तेनन्तमहिम्नि निर्मलचिदानन्दे तरङ्गावलीनिर्मुक्तेऽमृतसागराम्भसिमनाङ्मग्नोपिनाचामति' इति प्रबोधचन्द्रोदये शान्तब्रह्मस्वरूपस्य वर्णनमिहभाव्यम् । ब्रह्मस्वरूपभूतोर्मिरहितामृतसागराम्भसि मग्नोपि कदाचिदपि मनागपि तदम्भोरसं नाचामतीति कवेर्विस्मयस्तत्र । अम्भसिमग्नानामवशात् तदम्भः पानं सहजमनिवार्यंच ॥

'परमम्' परो मा अस्मादिति परमशब्दस्य व्युत्पत्तिः प्रदर्शिता आचार्यैरस्मद्ग्रन्थेषु, श्रीमन्मध्वमतग्रन्थेषुच । यद्यपि, 'परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः 'इत्यधिकरणे जन्मादि कर्तृ ब्रह्मस्वरूपस्यापि सर्वस्मात्परत्वं कथ्यत इव । नित्यविभूतावनुभूयमानब्रह्मस्वरूपस्य शान्त्येकरसस्यात्र परमत्वंवर्ण्यते 'शान्तंपरमंयद्ब्रह्मरूप' मिति । 'हरेः' इति जगद्व्यापारादीनामत्र शान्तविभूतौ शान्तस्वरूपेच संहृतत्वंद्योत्यतइव । उत्तरार्द्धे 'यथासुखं विहरतः' इत्यत्र

वर्णित लीलाविभूतौ यथासुखं विहरतोब्रह्मतः भोगविभूत्येकरस-विशिष्ट शान्तस्वरूपस्य भेदोव्यज्यतेऽनुपसृष्टकेवलहरिपदेन ॥

"मूर्तं ब्रह्म ततोपि तत्प्रियतरं रूपं यदत्यद्भुतम् ।"

शारीरकशास्त्र प्रथमाध्याय प्रथमपादे, आनन्दमयाधिकरणेन ब्रह्मस्वरूपस्य तदानन्दस्य च निरतिशयानुकूलत्वं प्रसाधितम् । तदनन्तरतच्छेषान्तरधिकरणे, ब्रह्मणो, दिव्यमङ्गलविग्रहस्य, भक्तमनोनयनहारिणः, भक्तेच्छानुविधायि स्वेच्छापरिगृहीतस्य, प्रकृतिसम्बन्धलेशरहितस्य, अदृश्यादतीन्द्रियात्, 'अद्रेश्यमग्राह्यं,' 'अपाणिपादं,' 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्चयत्' इत्यादिश्रुतिभिर्वर्णितात् स्वरूपात् मोक्षसाधनध्यानालम्बन योग्यतारूप शुभाश्रयत्वरूपगुणविशेषेण प्रजाभूतचेतनानामत्यन्तोप कारकत्वात्प्रियतमत्वमस्तीति तादृशविग्रहवैशिष्ट्यं तत्स्वरूपस्योप-वर्णितम् । स्वस्वरूपतोपि स्वविग्रहस्य प्रियतरत्वेऽयमेकोहेतुः । अस्तिचान्योहेतुः, यःस्पष्टं प्रदर्शितः श्रीभागवततृतीयस्कन्धद्विती-याध्यायारंभे उद्धवमुखेन महाभागवतायविदुरायश्रोत्रे, 'यन्मर्त्य-लीलौपयिकं स्वयोगमायाबलं दर्शयतागृहीतं । विस्मापनं स्वस्यच सौभगर्द्धेः परंपदं भूषणभूषणाङ्गम् ।', इति, 'तथैवचान्येनरलोक-वीराः य आहवेकृष्णमुखारविन्दम् । नेत्रैः पिबन्तोनयनाभिरामं पार्थास्त्रपूताः पदमापुरस्य' इति च । 'परंपदं भूषणभूषणाङ्ग' मिति भगवतः कृष्णस्यदिव्यमङ्गलविग्रहोवर्णितः, यः तत्पूर्वं, 'प्रदर्श्याऽतप्त-तपसामवितृप्तदृशांनृणां । आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोच-नम्' इत्युपक्षिप्तः । 'आभरणस्याप्याभरणं, प्रसाधन विधेः प्रसाधन

विशेषः, उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ।' इति विक्रमोर्वशीये ऊर्वशीगात्रशोभावर्णनं, 'भूषणभूषणाङ्ग' मित्यत्रगीतस्यानुसारि । 'भूषायुधैरधिगतंनिजकान्तिहेतोर्भुक्तं प्रियाभिरनिमेष निषेवणेन। प्रत्यङ्गपूर्णसुषमासुभगंवपुस्ते दृष्ट्वादृशौ विबुधनाथ न तृप्यतो मे ।' इति देवनायकपञ्चाशतिदेवनायकविग्रहानुभवोभाव्यः। 'परंपदं' इति विग्रहवर्णनं, 'तद्विष्णोः परमंपदं' मिति स्वरूपविषयक श्रौतवर्णन स्मारकम् । 'विस्मापनं स्वस्यच' इति भगवतोपिविस्मयकरमत्यद्भुतमिति स्पष्टंशुकेनवर्णनं अस्मिंश्लोके ध्रुवंकविहृदयस्थं, एतदर्थस्य स्पष्टार्षप्रमाणत्वात् वर्णनरीतिसौसादृश्याच्च । 'सौभगर्द्धेः' इति स्वविग्रहस्य निरतिशयसुभगत्वानुभवो भगवतानुभूत इति हेतुर्वर्णितः । तेनचात्यद्भुतमिति स्वविग्रहविषये स्वविस्मयः अत्यन्तमुचितएवेतितस्यन्याय्यत्वंदृढीक्रियते । 'ऋद्धे' रित्यतिशयितत्वं वर्ण्यते । स्वरूपादपिविग्रहस्य सौभगमधिकमृद्धमितिऋषेर्भावः ॥

इत्थममूर्त परब्रह्मस्वरूपतोपि मूर्तदिव्यविग्रहस्य प्रियतमत्व मत्यद्भुतत्वं च सिद्ध्यतः । विग्रहेब्रह्मशब्दप्रयोगः अतीवरस्यः । स्वरूपविग्रहयोस्सन्तोलने स्वरूपस्येव विग्रहस्यापि ब्रह्मसंज्ञासमानेतिरसः प्रदर्श्यते । उभयोः ब्रह्मशब्दाभिधेयत्वे कथंचित्समाने विग्रहरूपब्रह्मणः मूर्तत्वरूपध्यानालंबनसुकरतास्तीति अमूर्तात् ब्रह्मस्वरूपादतिशयरूपव्यतिरेको व्यज्यते । अमूर्तस्वरूपस्यध्यान दुर्घटता, मूर्तविग्रहस्य ध्यानालंबनसुलभतेतिविशेषः विग्रहस्य स्वरूपादतिशये पर्यवसितः । 'बृहत्वात् बृंहणत्वाच्चतद्ब्रह्मेत्यभिधीयते' इति ब्रह्मशब्दाभिधेयत्वे बृहत्वबृंहणत्वे प्रवृत्तिनिमित्त-

त्वेनाभिहिते । बृहबृंहिवृद्धौ इति धातुद्वयनिष्पन्नो ब्रह्मशब्दः। असङ्कोचन्यायेन बृहत्वस्यानवधिकातिशयत्वं वर्ण्यते परब्रह्मस्वरूप विषये। निरतिशयबृहत्वंनास्ति बृहतोपि सावयवस्य विग्रहस्य। बृंहणत्वं नाम बद्धजीवानां कर्माविद्यासंकुचितस्य स्वाभाविक विभुत्ववतो धर्मभूतज्ञानस्य संकोचककर्मा विद्यादिक्षपणेन स्वाभाविक निरतिशयदशया विकासयितृत्वम्, तेन च स्वभावभूत गुणाष्टकाविर्भावयितृत्वं, ज्ञानानन्दादिषु ब्रह्मतुल्यतया ब्रह्मीकरणं च। ईदृशबृंहणत्वं स्वरूपस्येव विग्रहस्याप्यस्ति। आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमं। पातकान्याशुनश्यन्ति किंपुनस्तूपपातकम्।' इति पापक्षयकरत्वं चास्ति मूर्तब्रह्मणः। कुवासनाकुबुद्धि कुतर्कनिचयादि विलापयितृत्वमप्यस्ति। 'क्षीयन्ते चास्यकर्माणि' इति मोक्षापेक्षित कर्मक्षयकरत्व सामर्थ्यमस्ति। भगवत्प्रियतमभूत संसारिमोक्षण व्यापारेऽत्यन्तं शुभाश्रय संज्ञकस्य स्वविग्रहस्योपकारकत्वमस्तीति तस्मिन् स्वरूपादपि प्रीत्यतिशयो न्याय्य एव। अत्यद्भुत मित्यस्याः सामान्योक्तेः तदत्यद्भुत मस्मादत्यद्भुत मित्यर्थो विवक्षितः। अतएव सामान्येनोक्तम्। 'सत्यं विधातुं निजभृत्य भाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः। अदृश्यतात्यद्भुत रूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम्।' इति लक्ष्मीनृसिंह विग्रहस्य नारदमुखेन श्रीभागवत सप्तमस्कन्धाष्टमाध्यायवर्णनमत्र स्मार्यते आचार्यैः, 'रूपं यदत्यद्भुत' मिति विग्रहवर्णनेन। 'नारसिंहवपुः श्रीमान्' इति सहस्रनामस्त्रोत्रे नामद्वय समभिव्याहारेण नारसिंहवपुषः अत्यतिशयित लावण्यवत्वं द्योतितमिति श्रीभट्टार्यै-

कृतम् । 'तमद्भुतं बालकमम्बुजेक्षणम्' इति कृष्णावतारवर्णक-श्लोकेऽपि 'तमद्भुत' मिति वर्णने तच्छब्देन वाचामगोचरत्वोक्त्या वाङ्मनसागोचरनिरतिशयाद्भुतमिति लभ्यते । श्रीरामावतार-वर्णने 'पुत्रेणामित तेजसा' इति वर्णनेनात्यद्भुत लावण्यमपि लभ्येत । 'रामइत्यभिरामेण वपुषा तस्यचोदितः । नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ।' इति अभितोरमयितृत्वबोधकाभिराम विशेष-णेन वपुषोऽत्यद्भुतं वसिष्ठ मनोहार्यभवदिति महाकविना 'अमित तेजसे' ति श्लोकवर्णनस्य भावो विवृत इव । 'रूपं यदत्यद्भुत' मित्यनेन आद्या परम पदनिलया मूर्तिरभिप्रेता । नृसिंहाद्यवतार विग्रहाणामत्यद्भुत लावण्यवत्वेन महर्षीणां वर्णनेन कैमुत्येना-ऽऽद्यविग्रहस्यात्यद्भुतत्वं व्यज्यते ॥

"यान्यन्यानि यथासुखं विहरतो (हरेः) रूपाणि"

'स्वेच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोसौ', 'यद्यद्धिया उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय' 'अजोपि सन्नव्ययात्मा भूतानामीश्वरोपिसन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया', 'परित्राणाय साधूनां' इत्यादीनिवचनानीह-भाव्यानि । विभवावतारा अनन्ताः । 'को वा कथं वा कति वा कदा वा विस्तारयन् क्रीडसि योगमायाम्' इति परिगणयितुमशक्या इति शुकेन गीतम् । 'परित्राणाय साधूना' मित्यत्रावतार प्रयोजन कथनावसरे, 'साधवः-उक्तलक्षण धर्मशीलाः वैष्णवाग्रेसराः मत्समाश्रयणे प्रवृत्ताः मन्नामकर्म स्वरूपाणां वाङ्मनसागोचरतया मद्दर्शनाद्विना स्वात्मधारणपोषणादिकमलभमानाः क्षणमात्रकालं

कल्पसहस्रं मन्वानाः प्रशिथिल सर्वगात्राभवेयुरिति मत्स्वरूप चेष्टितावलोकनालापादिदानेन तेषां परित्राणाय' इति भाषितम्। चन्द्रिकायां च, 'नह्यमीषामन्नपानताम्बूलादि धारणपोषणादिकं, किन्त्वहं कृष्ण एव सर्वं (पराङ्कुशमुनीना मेतदनुभवगाथाऽत्राऽऽचार्यैः प्रत्यभिज्ञाप्यते) इत्यभिप्रायेणोच्यते–मद्दर्शनाद्विना स्वात्मधारणपोषणादिकमलभमाना इति', 'स्वविश्लेषपरिक्लिष्टानामुज्जीवनाय प्रवृत्तस्य क्रमाद्भक्तानुभाव्याकारा उच्यन्ते–मत्स्वरूप चेष्टितावलोकनालापादि दानेनेति। नह्यपवर्ग सुखादिवदवतारमन्तरेण स्वसङ्कल्पमात्रेणैव तद्दातुं शक्य मिति भावः', 'एवं साधूनामान्तर भयात्परित्राणमुक्तम्' इत्यादिभिस्तद्विवृतम्। 'उदरमन्तरं कुरुते अथ तस्य भयं भवति, तत्त्वेव भयं विदुषोमन्वानस्य' इति श्रुतिरिह भयविवरणे आचार्यहृद्गता। 'विनाशाय च दुष्कृतां' इति बाह्यासुरेभ्यो भयात्परित्राणमुक्तम्। सर्वेष्ववताररूपभवनेषु 'यद्भावेषुपृथग्विधेष्वनुगुणान् भावान्स्वयं बिभ्रती यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका' इत्याचार्यश्लोकः, तन्मूलभूतपूर्वोदाहृताः, 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि। सर्वेषुचावतारेषु विष्णोः श्रीरनपायिनी' इत्यादि पराशरश्लोकाश्चात्रभाव्याः। एतत्स्तुतावाचार्यकवेः स्वश्लाघितपुराणरत्नश्लोकाः प्राचुर्येण हृत्स्था इति पूर्वमेवोक्तम्। 'स्वाभिमतानु रूपनित्यनिरवद्य स्वरूप रूपगुण विभवैश्वर्य शीलाद्यनवधिकातिशया संख्येय कल्याणगुणगण श्रीवल्लभ' इति पृथुगद्यसूक्तिरपीह भाव्या। 'विहरतोरूपाणी' त्यनेनावताररूप परिग्रहप्रयोजनं भक्तेभ्योऽत्यर्थ

सन्तोषप्रदानेन स्वयमप्यत्यर्थं सन्तोष भागिति व्यज्यते। 'यथा-सुखं' इत्यत्र दम्पत्योः सुखवत् भक्तानां यथा सुखं भवेत् तथेति चार्थग्रहणं स्वरसम्। सुखमनतिक्रम्य–यथासुखम्। एतेनावतारेषु दुःखित्व प्रदर्शनं विडम्बनमात्रमिति व्यज्यते। 'रक्षोधमेनवृकवत् विपिनेऽसमक्षं वैदेहराजदुहितर्यपर्यापितायाम्। भ्रात्रा वने कृपणवत् प्रियया वियुक्तः स्त्रीसङ्गिनां गतिमिति पृथयंश्चचार।' इति नवमस्कन्धनवमाध्याये शुकगीतमिह भाव्यम्। 'स्फारास्तीर्ण भुजङ्ग पुङ्गव वपुः पर्यङ्क वर्यगतौ सर्गस्थित्यवसानकेलि रसिकौ तौ दम्पती नः पतो। नाभीपङ्कजशायिनः श्रुतिसुखैरन्योन्यबद्धस्मितौ डिम्भस्याम्बुजसम्भवस्य वचनैरोंतत्सदित्यादिभिः।' इति श्लोके क्षीराब्धिशायि विभवे सुतवचनश्रवणस्य श्रुति सुखत्वानुभवो वर्णितः। 'किंमृष्टं सुतवचनं पुनरपिमृष्टं तदेवसुतवचनं' इत्याभाणकेन सुतवचनस्य सर्वस्मादपि मृष्टतरत्व मवधारितम्॥

'सर्वाणितान्याहुः स्वैरनुरूपरूपविभवैः गाढोपगूढानि ते।'

सर्वाणि तानीत्यत्र सर्वशब्देन प्रथम पादोक्तरूप शब्दाभिप्रेतं स्वरूपं, द्वितीयपादोक्ता आद्या परमपदस्थदिव्यमूर्तिः, यान्यन्यानीति तृतीयपादोक्ताः अवतार विग्रहाश्च जिघृक्षितानि। सर्वाणि तानीत्यत्र सर्वशब्देन 'सर्वेषु चावतारेषु विष्णोः श्रीरनपायिनी' इति पराशरश्लोकः प्रत्यभिज्ञाविलः। 'वागर्थाविवसंपृक्तौ' इति रघुवंशारम्भे पार्वतीपरमेश्वरयो र्नित्यसंश्लिष्टत्वेन वर्णनं विष्णुतत्पत्न्योरपि तुल्यम्। 'अशिथिलपरिरंभैराहितामिन्दिरायाः कनकवलयमुद्रां कण्ठदेशे (भोगे) दधानः। फणिपतिशयनीयादुत्थितस्त्वं प्रभाते

वरद सततमन्तर्मानसं सन्निधेया:' इति वरदराज पञ्चाशदन्ते गीतसुप्रभात पठनश्लोके स्वप्रियतमार्चावतार मूर्ति विषये शेषपर्यङ्के विग्रहयो र्गाढोपगूढत्ववर्णनं, 'किमपि किमपि मन्दंमन्दमासत्तियोगादविरलितकपोलं जल्पतोरक्रमेण । अशिथिलपरिरंभैर्व्यापृतैकैक दोष्णोरविदितगतयामारात्रिरेव व्यरंसीत ।' इत्युत्तररामचरिते सीतांप्रति रामस्यकथनं चात्रभाव्यो वरदमहादेवी विषयकाचार्यश्लोक: भवभूति श्लोकवर्णन स्मारक:, कुमार संभवे, 'रतिवलयसनाथे चापमासज्यकण्ठे' इति द्वितीयसर्गान्तश्लोके मन्मथकण्ठस्य रतिवलयमुद्रा सनाथवर्णनस्य च स्मारक: । आर्द्रया तन्मुद्रया कण्ठे सुदृश्यया मन्मथो रत्यासह शतमखसंनिधानं निर्लज्जो ययाविति कवेर्भावोज्ञाप्यते आचार्यै: । न साक्षात् रतिवलयसनाथस्तत्कण्ठ:, किन्तु कतिपयक्षण पूर्वभूतकान्ता गाढपरिरंभाहितार्द्र तत्करकमलवलयमुद्रासनाथ एवस: इति कविसार्वभौमहृदयं प्रकाश्यते कविसिंह्मेनाचार्येण । 'विष्णोर्देहानुरूपांवै करोत्येषाऽऽत्मनस्तनुम्' इति पराशरश्लोकोऽनुसंधयतेऽस्मिन्श्लोके, 'ते अनुरूपरूपविभवै:' इति । 'स्वेच्छागृहीताभिमतोरुदेह: संसाधिताशेषजगद्धितोऽसौ' इति वचनरीत्या यदायदा भगवान् जगद्धिताय स्वात्मभूतभक्तेच्छानुरोधेन वा स्वेच्छया वा कंचिदिव्यदेहं परिगृह्णाति तत्क्षण एव कान्ततद्देह गाढोपगूढत्वविरहरूपापायं क्षणमात्र मप्यसहमाना तदनुरूपा मात्मनस्तनुं परिगृह्य, तत्काल परिगृहीत कान्तदिव्यदेहेन परिरभ्य गाढोपगूढाभवतीति भावोऽत्रव्यज्यते । यान्यन्यानि भर्तृपरिगृहीतानि विभवरूपाणि तानि

सर्वाणि सद्यस्तत्परिगृहीततुल्यरूपै गाढपरिरब्धानि भवन्तीति विष्णोस्सर्वविभव विग्रहेभ्यः देवीपरिगृहीत तत्तदनुरूप विग्रहाणा मविश्लेषरूपानपायित्वम्। 'यद्भावेषुपृथग्विधेष्वनुगुणान् भावान् स्वयं बिभ्रती यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका' इति नानावतारवर्णनस्तोत्र भूमिकाश्लोके, 'तदनुगुणान् भावान् स्वयं बिभ्रती' त्यत्र स्वयं पदेन भर्तृप्रेरणां विनापि भर्तृसर्वविग्रह नित्यगाढाश्लिष्टत्वनैयत्यस्य क्षणमात्रापायप्रसङ्गमप्यसहमाना स्वयमेवसद्यः क्षणमात्र विलम्बं विनाभर्तृनूतन परिगृहीतविग्रहच्छाया यथा तत्क्षणमेवस्वयं तद्विग्रहं नित्यानपायित्वेनानुगच्छेत् तथेयमपि अनुगुणभावं परिगृह्य भर्तृनूतन विग्रहगाढाश्लिष्टैव भवतीत्याचार्यैर्व्यञ्जितम्। तथैवास्मिन्श्लोके यामुनाचार्याणां भावस्सुगमः। यथासुखं नवनव विग्रहपरिग्रहेण विहरतो हरेः विहरण प्रारंभे विहरण साधनत्वेन यानि यानि रूपाणि परिगृह्यन्ते तेषां तेषां रूपाणां तत्क्षण एव अनुरूपरूपविभवानत्वं परिगृह्य तै र्विभव विग्रहैर्भर्तुस्तानि तानि नवनव रूपाणितवन्नव नव विग्रहगाढाश्लिष्टानिभवन्तीतिभावः। 'सर्वेषुचावतारेषुविष्णोः श्रीरनपायिनी' इति सूत्रभूतस्य महर्षि प्रतिज्ञावचनस्य, न केवलमीश्वरदम्पत्यो स्स्वरूपयोः नित्यंगाढोपगूढत्वं, नापिकेवलंतयो र्नित्यसिद्धाऽऽद्य शुभमूर्त्योश्च नित्यगाढोपगूढत्वं, किन्तुयानि यावन्ति रूपाणि अवतारैः परिगृह्यन्ते दम्पतिभ्यां तानिसहैवपरिगृह्यन्ते स्वेच्छामात्रेण गाढोपगूढतयैव ताभ्याम। विष्णुपुराणे प्रथमांशाष्ट माध्याये, 'नित्यैवैषा जगन्माता विष्णोश्रीरनपायिनी। यथा सर्व-

गतो विष्णुः तथैवेयं द्विजोत्तम' इति प्रतिज्ञाय पतिपत्न्योर्नित्यं स्वरूपतो विग्रहतो विभूतितश्चाविनाभूतत्व सर्वगतत्वादिकं विरतरेणोपपादित मुभयोरप्याचार्ययोर्मूल प्रमाणत्वेन हृद्गतमिति स्पष्टमेव। 'नित्यंतद्धर्मधर्मिणी' इति पराशरोक्त मेवानुसृतं, 'यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका' इति दशावतार भूमिकाश्लोके। अत्र नानाकृतिरिति पदस्य न आकृतिनानात्वमर्थः, किन्तुनायकादपि अधिकनानादयाव्यापाररूपकृतिमत्वमर्थ इत्यस्मद्दशावतार स्तोत्र व्याख्यायां 'मातर्मैथिलि' इति श्रीगुणरत्नकोशश्लोकोदाहरण पूर्वकमुपपादितमिह भाव्यम्। धर्मैस्सधर्मत्वेपि कृतिभिरधिकत्वमस्या इति व्यतिरेको व्यञ्जितः। 'फणिपतिः शय्ये' त्युपक्रम्यात्रोपसंहारे गाढोपगूढत्ववर्णनेन शय्याक्षेपेणोप संह्रियते। 'शेषश्चत्तं विमल मनसां मौलयश्च श्रुतीनां सम्पद्यन्ते विहरण विधौ यस्य शय्या विशेषाः' इति श्रीस्तुति गीतमिह भाव्यम्॥

लब्धं ज्ञानं मयाऽध्यात्मं यन्मुखादमृतस्स्रुतः।
तत्प्रसादैकमूलेयं व्याख्या मन्मुख निस्सृता॥

॥ समाप्तः॥

